इति सूचीपत्रम् ।




श्रीः ।




# जातकसंग्रहः।

॥ श्रीगणेशाय नमः ॥ ॥ अथ द्वादशभावफलानां फलानि निरूप्यंते ॥ नत्वाश्रियंभवानींचशारदांबुद्धिवर्द्धनीम् ॥करोम्यहं स्वबोधायभावाध्यायंयथामति॥ १ ॥तत्रभावफलालोकनेविधिः ॥ भिन्नंद्वादशधाविरच्यविलसच्चक्रं चतत्रन्यसेल्लग्नाद्द्वादशराशयोतिविशदा वामांगभागेक्रमात् ॥ अंक्यास्तत्र नभश्वराः स्फुटतरा राशौचयत्रस्थितास्तेभ्यः साधुफलंत्वसाधुसुधिया वाच्यंहिहोरागमात् ॥ २ ॥ अथतनुभावविचारमाह॥ तत्रकिंविचार्य्यमित्युक्तं जातकाभरणे ॥ रूपंतथावर्णविनिर्णयश्च चिह्नानिजातिर्वयसः प्रमाणम् ॥ सुखानिदुःखान्यपिसाहसंचलग्नेविलोक्यंखलुसर्वमेतत् ॥ ३ ॥ तत्रादौसामान्यविचारेतनुभावोपरिग्रहाणां दृग्युतिफलान्याह तत्रसर्वग्रहदृष्टिफलम् ॥ विलोकितेसर्वग्रहे विलग्ने लीलाविलासैः सहितोबलीयान् ॥ कुलेनृपालोविपुलायुरेव भयेनमुक्तोरिकुलस्यहंता ॥ ४ ॥ अथलग्नस्थसौम्यत्रयेणराजयोगंपापत्रयेण दरिद्रयोगंचाह ॥ सौम्यास्त्रयोलग्नगता यदिस्युः कुर्वंतिजातंनृपतिंविनीतम् ॥ पापास्त्रयोदुःखदरिद्रशोकैर्युतंनितांतं बहुभक्षकंच ॥ ५ ॥ अथलग्नादरिद्मदा ७ ष्ट ८ मस्थैः शुभैः राजयोगमाह ॥ लग्नात् धूनषडष्टमेषुशुभदाः पापैरयुक्तेक्षिता मंत्री दंडपतिः क्षितेरधिपतिः स्त्रीणांबहूनांपतिः ॥ दीर्घायुर्गदवर्जितोगतभयः सौंदर्य्यसौख्यान्वितः सच्छीलोयवनेश्वरैर्निगदितोम-

र्यः प्रसन्नः सदा ॥ ६ ॥ अथलग्नस्थग्रहाणांफलानि । तत्रादौ रविफलम् ॥ गर्गजातके ॥ प्रचंडरूपोविकलेक्षणश्चभवेन्निशांधः किलबुद्बुदाक्षः ॥ कंठेग्रहःस्यान्मदरक्तनेत्रो भानौतनुस्थेरुधिरेक्षणः स्यात् ॥ ७ ॥ अन्यच्च । तनुस्थानगतेसूर्येदृष्टेवाकोपवान्भवेत् ॥ वातपित्तभवाबाधाशरीरेचास्यजायते ॥ ८ ॥ पाषाणादिप्रहारेणकष्टं शिरसिजायते ॥ कंठदेशेगुदेवापिव्रणोवाथतिलोभवेत् ॥ ९ ॥ बाल्यभावेहिजातस्य पीडादुःखान्यनेकशः ॥ विचार्य्यग्रहभावंचतथान्यदपिचोच्यते ॥ १० ॥ अथलग्नस्थचंद्रफलम् ॥ पूर्णेशीतकरे लग्ने सुरूपो धनवान्मृदुः ॥ असंपूर्णेतुमलिनोमंदवीर्य्योभवेत्सदा ॥ ११ ॥ अथक्षीणोपिराशिवशाच्छुभस्तदाह ॥ गो २ मेष १ कर्कटे ४ लग्नेचंद्रस्थेरूपवान्धनी ॥ जडत्वव्याधिदारिद्र्यंशेषर्क्षे कुरुतेशशी ॥ १२ ॥ अन्यच्च । तनुस्थानेस्थितेचंद्रेदृष्टिभिर्वाविलोकिते ॥ शिरस्यार्तिर्वातबाधाशीतताशौरवर्णता ॥ १३ ॥ श्वासः कासो हि जातस्य तनौ वातभ्रमोभवेत् ॥ अश्वादिपशुघातंचहृदयेराजचौरतः ॥ १४ ॥ अथतनुस्थभौमफलम् ॥ गुदरोगीश्लथश्चाभीकंडूकुष्ठादिनांकितः ॥ मध्यदेशेभवेद् व्यंगः सदा क्ष्योलग्नगेकुजे ॥ १५ ॥ अन्यच्च । तनुस्थानस्थितेभौमे दृष्टिभिर्वाविलोकिते ॥ लोहाश्मादिकृतापीडाकोपोत्यंतस्तनौभवेत् ॥ १६ ॥ रक्तपीडाशिशुत्वेचवातरक्तश्चजायते ॥ मस्तकेकंठमध्येचगुह्येचापि व्रणंभवेत् ॥ १७ ॥ अथलग्नस्थबुधफलम् ॥ सुमूर्त्तिर्निपुणःशांतोमेधावीविप्रियंवदः ॥ विद्वान्दयालुरत्यर्थंविनार्कंबुधेतनौ ॥ १८ ॥ अन्यच्च । तनौबुधेलोकितेचभिन्नवर्णशरीरकम् ॥ स्त्रीसुसंमध्यभागे

चवातपीडातनोभवेत् ॥ १९ ॥ विस्फोटादिभवंदुःखंमशकोथ
तिलोथवा ॥ गुल्मोदरविकारोवास्वल्पाहारोपिजायते ॥ २० ॥
अथतनुस्थगुरुफलम् ॥ कविः सुगीतः प्रियदर्शनः शुचिर्दाताऽ-
थभोक्तानृपपूजितश्च ॥ सुखीचदेवार्चनतत्परश्चधनीभवेद्देवगुरौतनु-
स्थे ॥ २१ ॥ अन्यच्च । तनुस्थानगतेजीवेगौरवर्णतनुर्भवेत् ॥
वातश्लेष्मशरीरेच बाल्येचसुखसंपदः ॥ २२ ॥ मिथ्यापवादजा
पीडाशत्रूणांविपदायिका ॥ राज्यतोमान्यमतुलं धनप्राप्तिरनेकधा॥
॥ २३ ॥ क्रूरदृष्टिसमायोगेव्यथाकाचित्प्रजायते ॥ योयोविघ्नः
समुत्पन्नः ससयश्चविनश्यति ॥ २४ ॥ अथतनुस्थभृगुफलम्॥
वाचालः शिल्पशीलाढ्योविनीतोगीततत्परः ॥ काव्यशास्त्रविनो-
दीचधार्मिकोलग्नगेभृगौ ॥ २५ ॥ अन्यच्च । तनुस्थानस्थितेशुक्रे
दृष्टिभिर्वाविलोकिते॥ गौरवर्णोभवेद्देहोवातपित्तसमन्वितः॥ २६ ॥
कटिपार्श्वोदरेगुह्ये व्रणोवाथतिलोथवा ॥ श्वशृंगिभ्योवायुतोवा
पीडादेहेप्रजायते ॥ २७ ॥ अथतनुस्थशनिफलम् ॥ कंडूति-
पूर्णांगकफप्रवृत्तिर्लग्नेशनौस्यात्सततंनराणाम् ॥ हीनाधिकांगत्वम-
थप्रदेशेकर्णांतरेवातगदःसदैव ॥ २८ ॥ लग्नेमंदेथवादृष्टेकृशदेहश्च
दुःखितः ॥ मूर्खश्चमदनाचारोभिन्नवर्णस्तनौभवेत् ॥ २९ ॥
लोहादिभिःशिरःपीडाआत्मचिंतानिरंतरम् ॥ यादृक्फलंशनौभो-
कंराहौतादृक्फलंभवेत् ॥ ३० ॥ तुलाकोदंडमीनानांलग्नसंस्थे
शनैश्चरे ॥ करोतिभूपतिंजातमन्यराशौगताशुभम् ॥ ३१ ॥ अथ
तनुस्थराहुफलम्॥सर्वांगरोगीविकलःकुमूर्तिःकुवेषधारीकुनखी-
कुकर्मा॥अधार्मिकःसाहसकर्मदक्षोरक्तेक्षणश्चंद्ररिपौतनुस्थे॥ ३२॥

अन्यत् । राहौलग्नगतेजातःसंचयंयत्रकुत्रचित् ॥ सिंहकर्किणि मेपस्थेस्वर्णलाभायमंगलम् ॥ ३३ ॥ अथकेतुफलम् ॥ यस्यलग्नोपगःकेतुस्तस्यभार्याविनश्यति ॥ बाहुरोगस्तथाव्याधिः मिथ्यावादीचजायते ॥ ३४ ॥ अथलग्नस्थैर्ग्रहैःप्रकृतिः ॥ सोमोवासोमपुत्रोवाराहुकेतुशनैश्वराः ॥ यस्यलग्नेस्थितास्तस्यांदोलितांप्रकृतिर्भवेत् ॥ ३५ ॥ कविर्गुरुर्भानुभौमौस्थिरप्रकृतिदायकाः ॥ राहुमंदौचयत्रस्थौतत्रस्यात्कृष्णलांछनम् ॥ ३६ ॥ अथलग्नपादायुराह ॥ सौम्योलग्नपतिर्लग्नेलग्नंवायदिवीक्षिते ॥ गतक्लेशश्चिरायुश्चसुखीलोकरतदाभवेत् ॥ ३७ ॥ लग्नंलग्नपतिर्वापिदुर्बलोस्तमितोपिवा ॥ तथाफलंचसामान्यंवक्तव्यंग्रहभावनः ॥ ३८ ॥ लग्नेवाथनवांशेवायेग्रहाश्चप्रकीर्तिताः ॥ ज्ञात्वातेषांस्वरूपंचफलंसम्यग्निरूप्यते ॥ ३९ ॥ इतिसामान्यविचारः ॥ अथविशेषविचारः ॥ स्वामिसौम्यदृष्टियुतवशात् उक्तंच ॥ योयोभावःस्वामिदृष्टोयुतोवासौम्यैर्वास्यात्तस्यतस्यास्तिवृद्धिः ॥ पापैरेवंतस्यभावस्यहानिर्निर्दिष्टव्यापृच्छतांजन्मतोवा ॥ ४० ॥ अथ पूर्वोपन्यस्तबलवशेनभावस्यहानिर्वृद्धिर्वाच्यातदुक्तंगर्गजातके ॥ नीचस्थोरिपुगेहस्थोग्रहोभावविनाशकृत् । उदासीनग्रहोमध्यो मित्रस्वर्क्षत्रिकोणगः ॥ ४१ ॥ स्वोच्चगश्चग्रहोऽवश्यंभाववृद्धिकरः स्मृतः ॥ व्ययाष्टषष्ठभावेषुवैपरीत्यत्वमावहेत् ॥ ४२ ॥ पश्यन् ग्रहःस्वलग्नंसर्वंविदधातिसौख्यमर्थंच ॥ भायोनृपतिर्भियत्वंपापीपापं शुभःसौख्यम् ॥ ४३ ॥ स्वगृहोचसौम्यवर्गेग्रहः फलंपुष्टमेवविदधाति ॥ नीचास्तरिपुगृहस्थोविगतफलंकीर्तितंमुनिभिः ॥ ४४ ॥

अथजातस्यकांश्चिदायुरादियोगानाह ॥ सन्ध्याद्वयेजनिम-
तोत्रयदेन्दुहोराराश्यन्तगैःखलखगैर्निधनंशिशोः स्यात् ॥ केन्द्रैः
सपापविधुभिः सकलैस्तथैवकामांगयोरपिमृतिःखलकर्तरीचेत् ॥
॥ ४५ ॥ स्मरांगयोःक्रूरखगावसद्युतः शशीनदृष्टश्चशुभैस्त
दाक्षयः ॥ शुभोनकेन्द्रेष्व्ययगे विधौ कशे खलैश्चतन्वष्टमगे
द्रुतं मृतिः ॥ ४६ ॥ षष्ठाष्टमेब्जेसुखगे चराहौ दुःस्थेमृतिः
सद्यइहेश्वरोच्यः ॥ वर्पणकेन्द्रे सखलेथयद्यन्योन्यर्क्षगौस्तोस्रगुरू
शिवाब्दैः ॥ ४७ ॥ सक्रूरोब्जोव्ययमृतिमदांगेष्वकेंद्रस्थसौम्यैर्नो
दृष्टोसौ शिशुमृतिकरोथाष्टमारिस्थितोब्जः ॥ दृष्टःक्रूरैरहनिजननं
यस्यकृष्णेचपक्षेशुक्लेसद्भिर्निशिजनिरयत्यत्रतंनान्यथोक्तम् ॥४८॥
तनाविन उतोडुपेन शुभयुक्तदृष्टे मृतिस्त्रिकोणमृतिगैःखलैर्बलयुतै-
र्नृणां स्यात्तथा ॥ व्ययांकतनुमृत्युगैरगुरुदृग्भिराकर्यर्कविध्वस-
ग्भिरथदुर्विधौसुतनवास्तगांत्यांगगे ॥ ४९ ॥ तनोररिविनाशगेख-
लखगैर्विधौवीक्षिते मृतिःशुभदृशासमाष्टकमतश्चमिश्रैर्दलम् ॥ ख-
लेरिभगतेष्टमेखलदृशैकवर्षः शिशूरवौनृपदिगब्दकःखलखगेक्षिते
केन्द्रगे ॥ ५० ॥ यमेर्कविधुसंयुतेनवसमाश्चमासोऽखिलैः षडष्टम-
गतैःखलैरथषडष्टगेकर्कगे ॥ शशीक्षितबुधे चतुर्थशरदिक्षयः स्या-
च्छिशोः सितोष्णगुयमाइमेखलयुताव्ययोमृत्यवे ॥ ५१ ॥ रवौ
कुजर्क्षेशनिगेहगेपिवा बहूग्रदृष्टोगुरुरन्तकृत्खगः ॥ शुभैरदृष्टाअशु-
भेक्षिताःखलामदाष्टगाःसाम्बशिशुक्षयंकराः ॥ ५२ ॥ होरास्वा-
मीपापदृष्टोऽष्टमस्थोजन्मेशाद्यश्चेन्मृतिर्वेदमासैः ॥ एवंकामेपापयु-
ग्जन्मपाद्योहोरेशश्चेत्क्रूरदृष्टोष्टमासैः ॥ ५३ ॥ सर्वपापनिरीक्षि-

तोगुरुरष्टमेनशुभेक्षितोरिष्टकृत्कुजगेहगोध्रुवमेववाकुटिलःशनिः ॥
केन्द्रनाशारिपुस्थितःकुजगेहगोबलिनाऽसृजा वीक्षितश्चसमात्रयेण
विशेषतः शिशुहानिदः ॥ ५४ ॥ शनिस्तनोरष्टमगस्तुकष्टदस्त्रि-
कोणगोनीचइनोपिताहशः ॥ कुजेष्टमेसत्यथषष्ठमृत्युगेखलेक्षितेब्धि-
ब्धिसमायुरात्मजः ॥ ५५ ॥ षष्ठनाशगतोबुधःशशिभेक्षयायवि-
धोर्दृशावेदहायनतोथषष्ठलयव्ययस्थशुभग्रहैः ॥ वीक्षितोहरिकर्क-
गोमृतिदोऽशुभेक्षणतःसितः षट्समाभिरथद्रुतं जनितस्यशिख्युदये
क्षयः ॥ ५६ ॥ तनौदृकाणायदिपाशपक्षिणां खलान्विताःसप्तम-
वत्सरेमृतिः ॥ खलास्त्रिकोणेनशुभेक्षिताःशुभाःषडष्टगाश्चेद्गजवत्स-
रेक्षयः ॥ ५७ ॥ तनोस्मरेखलग्रहेखलेक्षितान्वितेङ्गपे ॥ विधौ
तनौचजातकोत्रसप्तवर्षजीवनः ॥ ५८ ॥ त्रिकेऽस्तगैर्जन्मतनुपभूयदा
तदांशिशोराशिमिताब्दतश्च्युतिः ॥ बुधर्क्षगोब्जोर्ककुजान्वितः शुभे-
रवीक्षितोब्दे नवमेक्षयङ्करः ॥ ५९ ॥ अन्तिमांशगताःखेटाअत्यल्पा-
युःप्रदामताः ॥ स्वमित्रगृहतुंगस्थोबह्वायुःखेचरोभवेत् ॥ ६० ॥
अथात्रतनुविचारेपूर्वंरूपंकथितंतदाहवराहः ॥ लग्नवांशपतु-
ल्यतनुःस्याद्वीर्ययुतग्रहतुल्यतनुर्वा ॥ चंद्रसमेतनवांशपवर्णःकादिवि-
लग्नविभक्तभगात्रः ॥ ६१ ॥ दिवार्कशुक्रौपितृमातृसंज्ञकौशनैश्चरे
न्दूनिशितद्विपर्ययात् ॥ पितृव्यमातृष्वसृसंज्ञितौचतावथौजयुग्मर्क्ष-
गतौतयोःशुभौ ।६२।रवीन्द्रवीर्यैपितृमातृतुल्योयत्रिंशकेकौस्यगणो
ग्रहस्य ॥ तनूनवांशेशसमस्तुमूर्त्याबलिष्ठखेटप्रतिमोपिवास्यात् ६३
अथचिह्नबोधार्थमंगन्यासउदयभास्करे ॥ अथशिरोक्षिक-
कर्णनसाकपोलहनुवक्त्रमितित्रिलवादिमे ॥ अथिभुजांशभुजद्वय-

कुक्ष्युरोजठरनाभ्यभिधाखिलवेद्विके ॥ ६४ ॥ तदनुवस्तिरुपस्थगु-
देथवावृषणमूरुकजानुपदाःक्रमात् ॥ त्रिलवकर्तृतयेथतनोः पुरापर-
दलेंगमुदक्षमदक्षिणं ॥६६॥ इहखलैर्व्रणदृष्टयुतेक्षितेभृशकपूर्वकल-
क्षणमादिशेत् ॥ स्वभलवस्थिरगेसहजोन्यथात्वपरथात्ररवीखलुका
ष्ठजः ॥ ६६ ॥ शशिनिशृंगिजलोत्थभवोकुजेऽनलविशस्त्रभवः
शनितोश्मजः ॥ पवनजश्चशुभैःशुभजोथयत्पदगताखिलाश्चबुधा-
न्विताः ॥ ६७ ॥ भनियमाद्व्रणचिह्नकरोयदारिपुखलोव्रणकृत्सशु
भोंककृत् ॥ सशुभदृक्तिलकृचतथालघौलघुभेंगमणुत्वपरे
परः॥६८॥अथगुणाः ॥ रविखराम३०लवांशपतेर्गुणोभवतिसत्व
रजादिग्रहेर्कतः ॥ चंद्रार्कजीवाज्ञसितौकुजार्कीयथाक्रमसत्वरज-
स्तमांसि ॥६९॥ अथयोगैश्चिह्नमाह ॥ जातकमुक्तावल्याम्॥
लग्नात्सप्तमगोभौमःशुक्रोवापिबृहस्पतिः ॥ चिह्नंमूर्ध्निस्थितंज्ञेयंजात
कस्यनसंशयः ॥७०॥ यदाशुक्रोथवाभौमोलग्नस्थोपिनिशाकरः॥
द्वादशाब्देभवेत्तस्यमस्तकेचिह्नदर्शनम् ॥७१॥ जायास्थानेयदारा
हुर्मंत्रीवापितनुस्थितः॥ वामेभुजेभवेच्चिह्नंतिलमापादिकंस्फुटम् ७२
कुजेसौम्येथवालग्नेराहुः पष्ठत्रिकोणगः॥ लिंगेगुदेभवेच्चिह्नंतिलमापा-
दिकंस्फुटम् ॥७३॥ त्रिकोणेपिभवेच्छुक्रोजीवसौम्योमूर्तिस्थितौ॥
पातालहिबुकेमंदेकुक्षौचिह्नंसमादिशेत् ॥७४॥ धर्मस्थानेयदाशुक्रे
त्वष्टमेपिदिवाकरे॥ कर्मगोराहुमंदौचेन्नाभौचिह्नंसमादिशेत् ॥७५॥
व्ययस्थानेयदामंत्रीबुधोपित्रिषडायगः ॥ सहजस्थोयदाशुक्रोहृदिचि
ह्नंसमादिशेत् ॥ ७६ ॥ सहजस्थोयदाशुक्रोमंत्रीवात्रिषडायगः॥
धर्मस्थानेनिशानाथेगुदेगोलकमादिशेत् ॥७८॥ यवनः ॥ धनाश्रि-

तेभूतनयेसुखेथवा सौरेव्ययस्थेरिनवांशसंस्थे ॥ उन्मत्तरूपोत्रभवे-न्मनुष्यःसर्वत्रनिंद्यःकृतपिंडमतिश्च ॥ ७८ ॥ वर्णार्चितांगःसततंस्व-रूपः प्रतापयुक्तःपिशुनस्वभावः ॥ शनैश्चरेमृत्युगतेव्ययस्थेभौमेभवे-त्पापरतोमनुष्यः ॥ ७९ ॥ सौम्येविलग्नेशुभनेत्रवक्त्रःशुभांशवक्षः शुभजेनवांशे ॥ चंद्रस्यहोराशुभबाहुदात्रीत्रिंशांशके सौम्यभवेत्सु शीलः ॥ ८० ॥ सूर्य्यांशकेसौम्यसमुद्भवेचनरोभवेच्छोभनजानुपा-र्श्वः॥लग्नंशुभालोकितमिष्टवीर्य्यंमोजोविधत्तेसततंनराणाम्॥८१॥

इतिचिह्नज्ञानम् ॥ अथपृच्छायांलग्नाज्जातिर्ज्ञेया । उक्तंच ॥ लग्नपोवालग्नगोवायादृशोहिभवेद्ग्रहः ॥ सवर्णस्तत्समाचारोमान वोभविताभुवि ॥ ८२ ॥ अथपृच्छायामेवलग्नाद्वयःप्रमाणं वाच्यम्॥उक्तंच॥ पृच्छाकालेयथावाच्यंजन्मकालेपितत्तथा॥ यथालग्नगतेजीमेसवृद्धोपियुवाथवा ॥ ८३ ॥ तथालग्नगतेसौम्ये युवाबालायतेकिल ॥ शशिशुक्रौयदालग्नेनातिवृद्धोनवैयुवा॥८४॥ स्थविरोराहुमार्त्तंडौतथाजीवशनैश्चरौ ॥ स्थविरोसवलौयस्यग्रहौ स्यातांविलग्नगौ ॥ ८५ ॥ प्रकृत्यासत्नवेद्वृद्धोमान्यःसर्वजनेपुच॥ इतिवयसःप्रमाणम् ॥अथलग्नादायुः ॥सौम्येलग्नपतौवापिसौम्ये-र्वालग्नगैस्तदा ॥ चिरायुर्जायतेमर्त्योवीतक्लेशःसुखीसदा ॥ ८६ ॥ क्रूरेलग्नपतौनष्टेक्रूरालग्नगताग्रहाः ॥ अल्पायुपंप्रकुर्वंतिनात्रकार्या विचारणा ॥ ८७ ॥ अथसुखदुःखान्याहग्रहयोगवशाच्च ॥ उदयभास्करात् ॥ तनुपतिःसबलोष्ट ८ षडंद्व्य १२ गस्ततनुसु-खंनपडंद्व्य १२ मृतौ ८ दुखभे ॥ तनुसुखंनयदाविबलेगपेवपुपि पापखगेचरुजाधिकः ॥ ८८ ॥ तनुपतिःस्वगृहेवुधजीवभार्गवयु-

तथ्यचतुष्टयंगोथवा ॥ भवतितुंगगृहेयदिसौम्यभेहितदृशासुखरा-
ज्ययशोर्थभाक् ॥ ८९ ॥ सुरुचिरः सुकृतिः शुचिसत्यवान् य-
दिदिधुश्चक्रियेकलशेशनिः ॥ धनुषिभानुरदेवगुरुर्मृगेनिजभुजार्जित
वित्तयशस्तदा ॥ ९० ॥ यदिसमस्तचतुष्टयगाः खलाः धनग-
ताश्चपरेकुलहृत्स्वहृत् ॥ तनुगतोयदिवासुत ५ गोगुरुर्दश १०
विधुःसुमतिर्नृपतिर्दमी ॥ ९१ ॥ क्रियगतोभृगुजोयदिवांगनातुल-
गुरुश्चबुधःशुभवीक्षितः ॥ अलिगतश्चतुरःभटःसुधीःकुलपतिर्मुदि-
तःक्षमुदारदः ॥९२॥ यदिरविर्मदनेचमृतो ८ शनिः सुरगुरुश्चध-
नेपरभृत्यकः ॥ रविविधूनवमेव्ययगेत्वगौनृपसमीपचरःसततंभवेत्
॥ ९३ ॥ गुरुरवीमृतिभे ८ रविजःखभे १० खशिखि ३० वर्ष-
मितोचनृपार्थभाक् ॥ कुजरवी रिपुभे कुदिले८ शनौहिमकरेचसु-
खे ४ नृपदर्शकः ॥ ९४ ॥ धन २ शनौशशिभेगुरुचंद्रयोः दश-
गयोश्चभवेत्क्रयविक्रयी ॥ निजगृहोचसुरद्विपिकेंद्रपट्व्ययनवा-
त्मजगेबहुदःसुखी ॥ ९५ ॥ शशिनिसप्तमकोपगतेर्कजेवपुषिशू-
रतरोबहुपुत्रवान् ॥ गुरुरविव्ययगोवरपूजितः परभटश्चकुलेकुलरं-
ध्रकृत् ॥ ९६ ॥ सुरगुरुर्मृतिगोभृगुजोथवापरभटोगजराजविपा-
तकृत् ॥ अगुगुरूभवनेशनिरष्टमेयदिभवेत्सुभटोबहुयुद्धवित् ॥
॥ ९७ ॥ यदिगुरुर्मदनव्ययगोरविर्नवमगःकुसुतोमृतिग सुधीः ॥
यदिचभानुगुरूसुत ५ धामगोभवतिशास्त्रपटुर्धनधान्यवान्॥९८॥
यदिचतुष्टयगोभृगुजोगुरुर्विदपिवासधनःश्रुतिपारगः ॥ मदनगेहिम-
गोसासितेगुरोर्दशमधर्मगतेविदिलेखकः ॥ ९९ ॥ विधुविदोःशनि-
भास्करयोर्यदेज्यसितपोर्व्ययजोबहुलोभकः ॥ यदिशनिर्मदनेऽव-

निजस्त्वगुर्मूर्तिनयात्यसुखेगुरुतल्पगः ॥ १०० ॥ विधुगतोद्वितये तपनस्ततोशनिरतोऽवनिजोयदितस्करः॥बुधकुजोसबलोरिपुभावगोयदिविकल्पकरःकिलतस्करः ॥ १०१ ॥ मृगकुजश्चकुलीरशनिर्यदाभवति दस्युविधेरसिखंडितः ॥ मिथुनमीनधनुःकलशे खला अशनतोमरणायकुचेष्टितः ॥ १०२ ॥ वपुषिवित्रिलवेति चतुष्टयेभृगुसुतेनृपजोप्यथनीचकृत् ॥ मदकुजःख १० विधुर्द्वितयेरवेर्यदिशनिश्चतदोनतनुर्नरः ॥ १०३ ॥ यदिपरस्परनंदलवोपगोरविविधूमिलितोचदरिद्रगः ॥ यदिखलांतरगोविधुरर्कजःस्मरगतोविकलःक्षयगुल्मयोः ॥ १०४ ॥ प्रबलमंदकुजार्कनिशाचरास्त्रिकधनेक्षिरुजोनिलकोपतः ॥ त्रिसुतलाभखलानशुभेक्षिताःश्रुतिहराःस्मरगाश्चशुभावहाः ॥ १०५ ॥ कुरदनोयदिवारदनच्छदक्षतधरोनियतंहितदाभवेत् ॥ यदिकुजोभृगुजोविधनेव्ययेश्रुतिहरोत्र विधुर्यदिद्व्यघरः ॥ १०६ ॥ यदिशनिःकुजभेरविभेपिवाखलयुतोभुजदंडविखंडकृत्॥ यदिशनिःस्वभृगूरिपुभेगतोरिपुदशेकुभुजापदखंडदः ॥ १०७ ॥ यदितमोर्ककुजेंदुभिधामृती ८ सकलहस्तपदप्रतिखंडितः ॥ यदितमःशनिभेरविभेशशीभवतिशीर्षहतिःपरशुक्षते ॥ १०८ ॥ निधनअर्कविधूचशिरश्छिदेयदिखलत्रययुग्मिपुभेविधुः॥ विधुमदर्कचविद्व्ययदिकर्कटेशुभदृशारहितौशनिशीतगू॥ ॥ १०९ ॥ यदिविधुःखलभेर्ककुजेक्षितेद्विजहरःसशनिर्यदिगोग्रकः॥ यदिखगात्रितयंत्रिपदस्थितंभवतिशूलइतिदृढशूलकृत् ॥ ११० ॥ अन्यच्च ॥ कुजेस्मरेभाग्यगतेदिनेशेसितेष्टमेऽल्पायुरिहप्रजातः ॥ धनेसितेज्जेतनुगेवारव्योव्ययेसुतेबांधवबन्धभाक्स्यात् ॥ ११ ॥

त्रिखलयुग्मविजोविसितांगिराप्रकुरुतेलवुतांहिशुभायुपोः ॥ यदि तनौभृगुजोऽप्यथवाशनिर्भवतिसिंहगतोक्षिहरस्तदा ॥ ११२ ॥ व्ययरविर्यदिदक्षिणनेत्रहाहिमकरोव्ययगस्त्वपराक्षिहृत् ॥ सुररिपुर्वपुषींदुररौभवेयदिमृगीमुखरोगनिपीडितः ॥ ११३ ॥ खमदनव्ययगा यदिपामरा बहुलकष्टकराश्चविधुर्मृतौ ॥ अहिकुजार्कयुतोरविजोयदारुधिरतापकरःसदनीक्षितः ॥ ११४ ॥ खलतनौ तनुपेचखलादितेदृढतरामपवातनिपीडितः ॥ रविविधूभवभेतनुगेत्वगोविकुनखाब्दमितोहिजलोदरी ॥ ११५ ॥ गुरुकवीकुजभेव्ययगे त्रिधोत्रितयगेचकुजेसितकुष्ठवान् ॥ अगुकुजौसुखगोसविधूशरद्वय२५समाशुचमंडलकुष्ठदौ॥११६॥ रविकुजौमदनेतनुगेविधौचिपिटिकादिककष्टसमन्वितः ॥ स्मरगृहेर्कबुधेंदुमिथाःसुखेतदपरानृप १६ वत्सरदद्रुदाः ॥११७॥ सगुरुशुक्रबुधा निधने स्थिता वन२१मितब्दगणे त्रिमलार्त्तिदाः ॥ गुरुशनीहिमृतौहिमगू रिपौ बुधसितौनवमेतनुचिव्रता ॥ ११८ ॥ गुरुररौशनिरष्टमगो रविर्यदिचकर्किणिभौमदशाग्निभीः ॥ यदिविधुः स्मरगः सहजे कुजोंधृति१८समासुतरोः पतनंभवेत्॥११९॥ अशुभभेहिगुरौशुभभेभृगौनग७मितेशरदिस्फुटकोद्गमः ॥कविभशोत्थगुरौखलचक्रता यदिशिलाहतिकृद्भव११वत्सरे ॥१२०॥ यदितनौयसितेंद्रुरसद्गृहा नवधियो हि पिशाचजनुःप्रदाः ॥ यदिरविर्विधुवत्र्त्यनापहो यदि गुरुस्तनुगोमदनेकुजः ॥ १२१ ॥ मदरतायदिलग्नगतोगुरुः स्मरशनिर्वहुवातविकारदः॥ वृषकुलीरमृगालिपकोणगेष्वशुभदृष्टियुतेपु चकुष्ठवान् ॥ १२२ ॥ पापांतरालेचभवेत्कलावान् किलार्कसू-

नुर्मदनालयस्थः ॥ कलेवरंस्याद्विकलंचतस्यश्वासक्षयप्लीहकगु-
ल्मरोगैः ॥ १२३ ॥ सुतस्थितोवायदिमूर्तिवर्चोवृंहस्पती राज्य-
गतः शशांकः॥ नरस्तपस्वी विजितेंद्रियश्चस्याद्राजसोबुद्धिविरा-
जमानः॥१२४॥ एतेहियोगाः कथितामुनींद्रैर्थाद्वलंयस्यनभश्च-
रस्यं॥कल्प्यंफलंतस्यविपाककालेसुनिर्मलायस्यमतिस्तुतेन १२५
॥ अथतनुभावेमेषादिराशिफलंवृद्धयवनः॥मेषोदयेरक्ततनुर्म-
नुष्यः सदाल्पबुद्धिः परनिर्जितश्च ॥ पित्ताधिकः सर्वजनोपसेव्यः
सर्वाशनोबुद्धिविचक्षणश्च ॥ १२६ ॥ वृषोदयेश्वेततनुर्मनुष्यःश्ले-
ष्माधिकः क्रोधपरः कृतघ्नः ॥ समंदबुद्धिः स्थिरतासमेतः पराजि-
तःस्त्रीभृतकः सदैव ॥ १२७ ॥ तृतीयलग्नेपुरुषोतिगौर स्त्रीरक्त-
चित्तोनृपपीडितांगः ॥ शश्वत्प्रसन्नःप्रियवाग्विनीतः सुमूर्द्धजोगीत-
विचक्षणश्च ॥ १२८ ॥ कर्कोदयेगौरवपुर्मनुष्यः पित्ताधिकः
कल्पतनुः प्रगल्भः ॥ जलावगाहानुरतोतिबुद्धिः शुचिःक्षमीधर्म-
रतोतिसेव्यः॥१२९॥ सिंहोदयेपांडुतनुर्मनुष्यःपित्तानिलाभ्यांपरि-
पीडितांगः ॥ प्रियामिषोरण्यचरः सुतीक्ष्णः शूरःप्रगल्भःसुतरांनि-
रीहः ॥ १३० ॥ कन्याविलग्नेकफपित्तयुक्तो भवेन्मनुष्यः
शुभकांतिभाजः ॥ श्लेष्माऽप्रजः स्त्रीविजितोतिभीरुर्मायाधिकः
कामकदर्थितांगः ॥ १३१ ॥ तुलाविलग्नेचभवेन्मनुष्यः श्लेष्मा-
धिकः सत्यपरः सदैव॥ पुण्यप्रियःपार्थिवमात्रभक्तः सुरार्चनेतत्प-
रएवकल्पः ॥ १३२ ॥ लग्नेष्टमेकोपपरोनसत्योभवेन्मनुष्योनृप-
पूजितांगः ॥ गुणान्वितः शास्त्रकथानुरक्तः प्रमर्दकः शत्रुगणस्य
नित्यम् ॥ १३३ ॥ धनोदयेराजयुतोमनुष्यः कार्यप्रसक्तोद्विज-

देवभक्तः॥तुरंगयुक्तःसुहृदैःप्रयुक्तस्तुरंगजंघश्चभवेत्सदैव ॥१३४॥ मृगोदयेतोपरतः सुवृत्तोभीरुः सदापुण्यविधौपरश्च ॥ श्लेष्मानिलाभ्यांपरिपीडितांगः सुदीर्घगात्रः परवंचकश्च ॥ १३५॥ घटोदये सुस्थिरतासमेतो वाताधिकस्तोयनिषेवणोत्सुकः ॥ सुहृत्सुगात्रः प्रमदास्वभीष्टः शिष्टानुरक्तोजनवल्लभश्च ॥ १३६ ॥ मीनोदयेतोयरतोमनुष्योभवेद्विनीतः सुरतानुकूलः॥सुपंडितःस्त्रीदयितः प्रचंडः पित्ताधिकःकीर्तिसमन्वितश्च ॥१३७॥इतिराशिफलम् ॥ अथ तनुभावस्वामिनोद्वादशभावेषुफलम् ॥ तत्रवृद्धयवनः ॥ लग्नाधिपतिर्लग्नेनीरोगंदीर्घजीवितंकुरुते ॥ बलवंतंदृढगात्रंरूपयुतंबहुप्रतिष्ठितंचेव ॥ १३८ ॥ लग्नपतिर्धनभवनेधनवंतंविपुलजीवितंस्थूलम्॥स्थानप्रधानमीशंसत्कर्मरतंनरंकुरुते॥१३९॥ सहजगतोलग्नपतिःसद्बंधुवरमित्रपरिकलितम् ॥ धर्मरतंदातारंशूरंसबलंकरोतिनरम् ॥ १४० ॥ लग्नेशस्तुर्यगतोनृपप्रियंप्रचुरजीवितंकुरुते ॥ लब्धियुतंबहुमित्रपित्रोर्बहुभक्तिभाजनंकुरुते ॥ ॥ १४१ ॥ पंचमगोलग्नपतिःससुतंसत्यागमीश्वरंविदितम् ॥ बहुजीवितंसुशीलंसुकर्मनिरतंनरंतनुते ॥ १४२ ॥ रिपुभवनेलग्नेशेनीरोगंभूमिलाभयुतंसबले ॥ कृपणंधनिनमरिघ्नंसुकर्मपक्षान्वितंकुरुते ॥ १४३ ॥ प्रथमपतौसप्तमगेतेजस्वीशीलवान्भवेत्पुरुषः ॥ तद्भार्यापिसुशीलाज्ञयाकलितासुरूपाच ॥ १४४ ॥ लग्नपतौत्वष्टमगेकृपणोधनसंचकःसुदीर्घायुः ॥ क्रूरेखचरेक्रूरःसौम्येवपुषाभवेत्सौम्यः ॥ १४५ ॥ मूर्तिपतिर्यदिनवमेतदाभवेत्प्रचुरबांधवःसुकृतिः ॥ समचित्तश्चसुशीलःसुकृतीरन्यातरततेजस्वी

॥ १४६ ॥ अथमेशेदशमस्थेनृपमित्रःपंडितःसुशीलश्च. ॥ गु-रुमातृपूजनमतिर्नृपतिसमृद्धःपुमान्भवति ॥१४७॥ एकादशग-स्तनुमःसुजीवितंसुतसमन्वितंविदितम् ॥ तेजःकलितंकुरुतेपुरु-षंबलिनंनसीदतिचेत् ॥ १४८ ॥ द्वादशगेलग्नपतौपटुवाग्वा-चंकरोतिकर्णहितम् ॥ सहगोत्रकैरमिलितंविदेशगंवित्तभोक्ता-रम् ॥ १४९ ॥ इतितनुभावाध्यायः ॥ १ ॥ अथधनभा-वः॥ तत्रकिंविचार्यमित्युक्तंजातकाभरणे ॥स्वर्णादिधातुःक्रय-विक्रयश्चरत्नानिकोशोपिचसंग्रहश्च ॥ एतत्समस्तंपरिचिंतनीयं ध-नाभिधानेभवनेसुधीभिः ॥ १ ॥ अथात्रसामान्यविचारेणधन-भावेग्रहयुतदृष्टितायाःफलम् ॥ तत्रादौरवेः ॥ धनस्थानगते सूर्य्येदृष्टिभिर्वाविलोकिते ॥ चौरैर्नृपैर्धनंनीतंधनंस्वल्पंगृहेभवे-त् ॥ २ ॥ ॥ गर्गमतेन ॥ धनभावगतेसूर्य्येधननाशमहर्निश-म् ॥ करोतिनिर्धनंचाथताम्रवित्तंददातिच ॥ ३ ॥ ॥ अन्यत्॥ धनेदिनेशोतिधनानिनूनंकरोतिमंदेनचनेक्षितश्चेत् ॥ शुभाभिधा-नाधनभावसंस्थानानाधनाभ्यागमनानिकुर्य्युः ॥ ४ ॥ ॥ अथ-धने चंद्रयुतिदृष्टिफलंगर्गजातके॥रौप्यंकांचनयुक्तंचमणिरत्न-धनंभवेत्॥कर्पूरचंदनामोदीधनेकुमुदबांधवे॥५॥अन्यत् जातक-रत्ने॥धनेचंद्रे धनीलोकेदृष्टिभिर्वाविलोकिते ॥ भगिन्यास्तस्यक-न्यायाद्रव्यनाशोपिजायते॥६॥ अथभौमफलम् गर्गजातके ॥ कृपिकोविक्रयीभोगीप्रवास्यरुणवित्तवान् ॥ धातुवादीमतेर्नाशो द्यूतकारःकुजेधने ॥ ७ ॥ जातकरत्ने ॥ धनेभौमेथवादृष्टे धनहा-निःप्रजायते ॥ पीडादेहेचनेत्रेचभार्याबंधुजनैःकलिः ॥ ८ ॥

अथबुधफलम् ॥ बुधेधनेलोकितेवाधनाढ्योराजपूजितः ॥ पटुभा-
षीधनेनष्टेपुनरन्यचलभ्यते ॥ ९ ॥ गर्गः ॥ धनंददातिबहुधानाशयेच्चं-
द्रवीक्षितः ॥ त्वग्दोषंकुरुतेनित्यंसोमपुत्रःकुटुंबगः ॥ १० ॥
अथधनस्थगुरुफलम् ॥ गर्गः ॥ लक्ष्मीवान्नित्यमुत्साहीधन-
स्थेदेवतागुरौ ॥ बुधदृष्टेचनिःस्वःस्यादितिसत्यंप्रभाषितम् ॥ ११ ॥
॥ जातकरत्ने ॥ गुरौधनेथवादृष्टेधनधान्यसुखंभवेत् ॥ विद्याविनय-
संपन्नोमान्यः सर्वस्यजायते ॥ १२ ॥ अथभृगुफलमाह गर्गः ॥
विद्यार्जितधनोनित्यं स्त्रीधनैरथवाधनी ॥ शुभदृष्टः शुभक्षेत्रेबुध-
दृष्टेभृगोधनी ॥ १३ ॥ जातकरत्ने ॥ धनेशुक्रेवीक्षितेवाधनवां-
श्चबहुश्रुतः ॥ मुखेचललितावाणीसभायांपटुतातथा ॥ १४ ॥
शत्रुक्रूरैर्युतेदृष्टेधनहानिः प्रजायते ॥ राजतश्चोरतोवापिमार्गेविघ्नः
प्रजायते ॥ १५ ॥ अथशनिफलंगर्गः ॥ काष्ठांगाराल्लोहधनःकुका-
र्यान्धनसंचयः ॥ नीचविद्यानुरक्तश्चदीनोवामंदगोधने ॥ १६ ॥
जातकरत्ने ॥ धनेमंदेधनैर्हीनोनिष्ठुरोदुःखितोभवेत् ॥ मित्रसौ-
म्यैर्युतेदृष्टेधर्मसत्यदयान्वितः ॥ १७ ॥ पापैर्युक्तेक्षितेवित्तेशत्रुयु
क्तेक्षितेपिवा ॥ धनक्षयोभवेन्नित्यंशुभेलग्नेश्वरेशुभम् ॥ १८ ॥
मृतवत्साभगिन्यादिगर्भस्रावादिकंवदेत् ॥ प्रतिवेश्मादिबालानां
विपत्तिरपिकथ्यते ॥ १९ ॥ अथधनस्थराहुफलम् । गर्गः ॥
मत्स्यमांसधनेनित्यंनखचर्मादिविक्रयी ॥ जीविकाचौरकृत्याच्चरा-
हौधनगतेनरः ॥ २० ॥ अथकेतुः ॥ द्वितीयभवनेकेतुर्धनहानिः
प्रयच्छति ॥ नीचसंगीचदुष्टात्मासुखसौभाग्यवर्जितः ॥ २१ ॥
शुभाधनगताःकुर्युर्वाग्मिनंप्रियभोजनम् ॥ क्रूराःकुर्युर्विशेषेणकद-

त्वंबहुभापिणम् ॥ २२ ॥ इतिसामान्यविचारः ॥ अथविशे-
षविचारो जातकसारे ॥ धनस्वामीचसत्खेटैर्युग्दृष्टोधनवृद्धिदः॥
क्षीणेंदुःपापयुग्दृष्टोविनास्वर्क्षधनापहः ॥ २३ ॥ सारावल्याम्॥
रवितनयभौमरवयः कुटुंबसंस्थाविलोकनाद्वापि ॥ कुर्वंतिधनवि-
नाशंक्षीणेंदुनिरीक्षिताविशेषेण ॥ २४ ॥ भौमेंदूधनसंस्थौत्वग्दोषद-
रिद्रताकरौकथितौ ॥ मंदस्तुधनस्थानेमहार्थयुक्तंबुधेक्षितः कुरुते
॥ २५ ॥ रविरपि निधनंजनयतियमेक्षितः शस्यतेऽन्यदृष्टश्च ॥
सौम्याः कुटुंबसंस्था बहुप्रकारं धनंदद्युः ॥ २६ ॥ बुधदृष्टस्त्रिद-
शगुरुः कुटुंबराशौचविभ्वतांकुरुते ॥ सोमसुतोपिशशिनानिरीक्षि-
तोहंतिसमस्तधनम् ॥२७॥ चंद्रोपिधनस्थानेक्षीणोपिबुधवीक्षितः
सदाकुरुते॥ पूर्वार्जितार्थनाशंनिरोधमपिचान्यवित्तस्य ॥ २८ ॥
शुक्रः कुटुंबराशौसूर्येंदुनिरीक्षितोधनंदाता ॥ सौम्यगृहेशुभदृष्टः
सएवधनदः सदाज्ञेयः ॥ २९ ॥ ग्रंथांतरे ॥ धनस्थानगतेजी-
वेधनीभवतिबालकः ॥ बुधस्तत्रैवभोगीस्यात् शुक्रेभूमिपतिर्भवे-
त् ॥ ३० ॥ धनस्थानेयदाचंद्रःपंचमस्थोयदारविः ॥ तदाधन-
क्षयंविंद्यादृशवर्षाणिपंचच ॥ ३१ ॥ संकेतनिधौ ॥ स्वोच्चेबुधेत-
नुगतेससितेम्बरेब्जेसेज्येमदेचसुतआर्क्यसूजोर्नृपालः ॥चेदम्बराय
तनुगाविधुमंदपूज्याज्ञारौधनेरविसितौहिबुकेधनीस्यात्॥ ३२॥गृहे
स्वोच्चेकेंद्रेनरपतिसमः स्यात्समुदिततनोरर्कज्यौचेत्सुतभवनगौशा-
स्वधनयान् ॥ बलीसौम्योलग्नेसधनपतिकेन्द्रेचशुभकृत्खलःषष्ठेकेंद्रे
सशुभइहवियार्थसहितः ॥ ३३ ॥ अन्यद्योगांतरं केनास्यधन-
प्राप्तिः ॥उदयभास्करे॥तनुगतोविधुतोबुनि ४चारविः सुखपदग्-

जनकाद्द्रविणप्रदः ॥ यदितनौसदिवाकरखे १० श्वरोऽधिपतियोग-
दृशः पितृकोपवान् ॥३४॥ हरि ५ बुधोयदिवाघट ११ वाक्प-
तिर्वपुपितत्पुरुपत्रयजंधनम् ॥ समृदुचेद्धनभेत्यधिकारवद्बहुतदास्य
वधूर्धनभृद्भवेत् ॥३५॥ अथांधयोगानाह ॥ यदिधनांत्यपती २
१२ त्रिक ६ । ८ । १२ गौसितांगपयुतौचतदानयनक्षतिः ॥
यदिविधुः ससितः सखलोधनेविनयनो यदिसेंदुभृगुस्त्रिके ॥ ३६ ॥
निशितदांधउतार्कसितान्वितस्तनुपतिर्जननांधकरस्तदा ॥ पितृसु-
ताऽनुजमातृकुटुंबिनीपतयएवमिताहितथाफलाः ॥ ३७.॥ संके
तनिधौ ॥ द्वादशेलग्नतोमीनगश्चेद्रविर्दक्षनेत्रार्तिकृद्वात्रिपोऽन्वा-
क्षिहा॥ पंचमेस्तंगतश्चेत्कुजोवासितः स्याचदाचक्षुपाकाणएवस्फु-
टम् ॥ ३८ ॥ सिंहलग्नेसितोवायमोवाव्ययेनेत्रपीडाकरोमानवा-
नांमतो ॥ स्वव्ययार्येष्टमेपुक्रमाद्भूमिजार्कीन्दुसूर्यैयुतस्तद्वजाक्ष्णोः
क्षयः ॥ ३९ ॥.इत्यंधयोगाः ॥ अथधनसंख्यायोगानाह ॥
पवनजातके ॥ सहस्रनाथोदिनपः प्रदिष्टोलक्षाधिपोरात्रिकरः स-
दैव ॥ शताधिपोभूतनयस्तथैव कोटीश्वरोचंद्रसुतः सदैव॥ ४० ॥
सर्वाधिराजः सुरराजमंत्रीशुक्रोथशंखंशनिरल्पतुल्यः॥स्वतुंगगाः
स्युर्यदिसर्वएतेत्वथांतरालेह्यनुपाततः स्यात् ॥ ४१ ॥अत्रानुपातः
स्थानबलोक्तवत्तदाह॥पादोनंचबलं त्रिकोणगृहगेस्वर्क्षेदलंचत्रये
भांशाहाधिपमित्रभेचचरणो मित्रेसमर्क्षेऽष्टमः ॥ ४२ ॥इतिधनसं-
ख्यायोगः ॥ अथधनस्यव्ययः केनहेतुनाभविष्यतितद्योगा-
नाहवीरजातके॥ वित्तस्यभवनेस्थैर्य्यंबुधेभानुसमन्विते॥ प्रियाद-
लितवित्तंस्यात्सौम्येहेपुरुपान्विते ॥ ४३ ॥ निपादम्लेच्छसंयुक्ते

ग्रहेतत्रसुसंस्थिते॥वेश्यागंधर्वनाट्येनतद्धनस्यव्ययोभवेत् ॥ ४४ ॥
पूर्वदेवेज्यदेवेज्योधनभावेसमागतौ ॥ व्ययंधनस्यकुरुतः नित्यंभू-
सुरस्वःसुरैः ॥ ४५ ॥ अथधनस्थैर्ग्रहैरोगचिह्नान्याह ॥ वि-
षेणवाथशस्त्रेण तथारक्तप्रकोपतः ॥ तन्मृतिर्विहितालोकेभौमोय-
द्धनसंस्थितः ॥ ४६ ॥ मुखेवाप्यथवानेत्रे दक्षिणांसेचकर्णके ॥
व्रणंवाथविघातोवाक्रूरैःस्याद्धनगैर्ग्रहैः ॥ ४७ ॥ शनौवासिंहिके-
येवातत्रस्थेग्रहजारुजा ॥ चंद्रेणशीतजादोषाःसन्निपातसमाश्र-
याः ॥ ४८ ॥ दंतुरोदंतरोगीवातत्रस्थेसिंहिकात्मजे ॥ ससौम्यं-
वदनोवाग्मीजीवेतत्रैवसंस्थिते ॥ ४९ ॥ अथधनंकदादेदितित-
द्योगानाह ॥ धनस्थानेयदाचंद्रःसौम्योवायदिगच्छति ॥ धनेशो
वापिलग्नेशोयदादेदितितदाधनम् ॥ ५० ॥ धनाख्यंतच्चभवनंपुरुष-
स्यमुखंस्मृतम् ॥ सौम्याःकुर्वंतिरूपाढ्यंक्रूरास्तत्ररुजान्वितम् ॥
॥ ५१ ॥ सुवर्णविविधंरत्नंशुभंमुक्ताफलैर्युतम् ॥ सर्वयस्तुभवं
लाभंसौम्यावर्णान्वितांगिरम् ॥ ५२ ॥ दद्युःसौम्यग्रहास्तत्रसं-
स्थिताश्चबलान्विताः ॥ लग्ननाथोविशेषेणशुभंपूर्णंप्रयच्छति ॥
॥ ५३ ॥ सौम्यदृष्टिःशुभाप्रोक्ताक्रूरदृष्टिर्नशोभना ॥ यदिलग्नप-
तिःक्रूरस्तथाप्येवंनसंशयः ॥ ५४ ॥ यदासूर्योमुखेयस्यजातक-
स्यभवेत्कंचित् ॥ शैलेयव्याधितंचिह्नंभवेत्तस्यनचान्यथा ॥ ५५ ॥
नात्यंतधनसंपन्नोमानवोजायतेभुवि ॥ बुधेचैवतथासूर्येभवेत्सेवा-
भियःसदा ॥ ५६ ॥ एतेयोगाःपृच्छायामप्यवलोकनीयाः ॥
इतिविशेषविचारः ॥ अथधनभावेराशिफलम् ॥ यवनः ॥ आ-
द्येधनगतेपुंसांधनंपुण्यार्जितंभवेत् ॥ चतुष्पदोत्थंचधनंचधूर्त्थंचप्र-

यच्छति ॥ ५७ ॥ वृषेधनस्थेलभतेकृपियत्नेनवैधनम् ॥ चतुष्पदान्नमणिभिर्नित्यंप्राप्नोतिवैभवम् ॥ ५८ ॥ तृतीयेधनगेनित्यं धनंस्त्रीजनितंभवेत् ॥ रौप्योद्भवंकांचनाश्वेर्धनंपुंसामहर्निशम् ॥ ॥ ५९ ॥ कर्केधनगतेनृणांधनंवृक्षजलोद्भवम् ॥ न्यायार्जितंसुभोज्यंचसुतानांप्रीतिदायकम् ॥ ६० ॥ पंचमेधनगेराशौधनमारण्यजंसदा॥सर्वोपकारकंचैवविक्रमोपार्जितंतथा ॥ ६१ ॥ वित्तेंगनागतेराशौधनंभूमिपतेर्भवेत्॥ हिरण्यमुक्तामणिजंगजाश्वादिभिरेवंच ॥६२॥ तुलेधनस्थेलभतेधनंपण्यसमुद्भवम् ॥ आहवादिप्रजातंचधनंन्यायार्जितंतथा ॥ ६३ ॥ अलौधनेधनंपण्यंप्रभूतंह्यश्मजंतथा ॥ मृन्मयंमौक्तिकंचैवतथासस्योद्भवंधनम् ॥ ६४ ॥ धनेधन्वीधनस्थेर्थ्यंयशोर्थंचरसोद्भवम् ॥ पश्वादिसंभवंचैवतथाधर्मेविधानजम् ॥ ६५ ॥ मृगेधनस्थेचधनंप्रपंचैर्विविधैर्भवेत् ॥ नृपसेवासमुत्थंचकृपिभिश्चविदेशतः ॥६६॥ घटेधनस्थेचधनं प्रभूतंफलपुष्पजम् ॥जलोद्भवंसाधुभोज्यंजनोत्थंचोपकारकैः ॥६७॥ मत्स्येधनस्थेलभतेमनुष्योधनंप्रभूतंर्नियमोपवासैः ॥ विद्याप्रभावान्निधिसंगमाच्चमातापितृभ्यांसमुपार्जितंच ॥ ६८ ॥ अथधनभावस्वामिनोद्वादशभावोपरिफलंवृद्धयवनः॥ द्रव्यपतिर्लग्नगतः कृपणंव्यवसायिनंसुकर्माणम् ॥ धनिकंश्रीपतिविदितंकरोतिनरमतुलभोगयुतम् ॥ ६९ ॥ धनपोधनभावस्थोधनवंतंधर्मकर्मनिरतंच ॥ लाभाधिकंसलोभंकुरुतेपुरुषंसदाऽऽद्यानम् ॥ ७० ॥ सहजगतेतुधनेशेव्यवसायीकलिकरोकलाहीनः ॥ चौरश्चंचलवित्तो भवतिनरोविनयनयरहितः ॥ ७१ ॥ तुर्य्यगतेद्रविणपतौपितृ-

लाभश्चापरैःसहोपायः ॥ दीर्घायुःक्रूरेष्वपिअथवामरणंविनिर्देश्यम् ॥ ७२ ॥ शश्वद्विलसन्नयनंकर्मणिकष्टेरतंप्रसिद्धंच ॥ कृपणंदुःखविघाततनयगतोद्रव्यपःकुरुते ॥ ७३ ॥ षष्ठगतेद्रविणपतौ धनसंग्रहतत्परंकृतघ्नंच॥भूस्वामिनंचखचरेपापेधनवर्ज्जितंसदापुरुषम् ॥ ७४ ॥ धनपेसप्तमगृहगेश्रेष्ठांगनाविलासभोगभाग्भवति ॥ धनसंग्रहणीभार्याक्रूरेखचरेभवेद्वंध्या ॥ ७५ ॥ धनपेचाष्टमभावे स्वल्पकलिश्चात्मघातकःपुरुषः ॥ उत्पन्नभुग्विलासपिराहिंसकः सदैवदेवपरः ॥ ७६ ॥ धनपेधर्मगृहगेसौम्येदानप्रसिद्धिभाग्भवति॥ क्रूरेदरिद्रभिक्षुश्चविडंबवृत्तिस्तथामनुजः ॥ ७७ ॥ दशमस्थेचधनेशेनरेंद्रमान्योभवेच्चनरपालः ॥ सौम्यग्रहेचमातुःपितुश्चपरिपालकः पुरुषः॥ ७८ ॥एकादशगेस्वपतौव्यवहारपरंश्रियःपतिंख्यातम् ॥ प्रतिपालकंचलोकेसततंकुरुतेनरंजातम् ॥ ७९ ॥द्वादशगेद्रविणपतावष्टकपालीविदेशऋद्धिश्च।दुष्कर्माक्रूरग्रहेसौम्यग्रहेचसंग्रामिकःपुरुषः ८० ॥ अन्यच्च।धनेशलग्नेशयुताःशुभाश्चेद्धनस्थितास्तत्फलमेवदद्युः। शुभाढ्यदृष्टेस्वसुखंशुभावागुनिःस्वोऽब्जदृष्टेविदिवात्रपापे॥ ८१ ॥ एवंकुशोऽब्जोधनगोज्ञदृष्टोधनक्षयायेर्वभितस्तदाल्पे ॥रोगोत्थचिह्नंमुखगोपदार्कः सद्मीग्रहश्चेत्कटुवाक्कृशस्वः॥ ८२ ॥सज्ञेरवौसेवनकृत्बलस्वोथभ्रावपाल्येस्यकरास्थितस्वः ॥ भवेयथोदाहरणंसुतेशेग्नीखेचरेस्यास्तिसुताकरेस्वम् ॥ ८३ ॥ चेद्भ्रातृपेस्याद्भगिनीकरस्थं मातृष्वसामातुलपेतुवाच्या ॥ राहोधनेदन्तरुजाधनस्थेऽब्जेसन्निपातादिकशीतरोगी ॥ ८४ ॥ तत्रस्थितेक्रूरयुतेसिनेस्यात्काणोथवाक्र्णविकृतः स्खलद्गीः ॥ धनव्ययस्थे भृगुजेथवारकर्ण-

व्यथाङ्जेतुदृशोर्विकारः ॥ ८५ ॥ जीवेकोशेसाधिकारेथवाङ्गेवाग्मीसस्यान्मानवः सौम्यवक्रः ॥ केतौदीर्घास्योथखेटःस्वगश्चेत्सारिस्तद्वेयास्यमृत्युर्मुखार्त्या ॥ ८६ ॥ विधौधनेभीः सलिलात्तथाकौराहौधनेवावनितांग्रहाढ्ये ॥ म्लेच्छैर्निपादैर्गणिकाजनैर्वा गान्धर्वनाट्यादिभिरस्वतास्यात् ॥ ८७ ॥ यदास्वपोवाधनगःकुजश्च चेन्निर्वलोऽर्याग्निनृपैःस्वनाशः ॥ रक्तप्रकोपाद्विपशस्त्रघातान्नरस्य मृत्युःक्षितिजेसपापे ॥ ८८ ॥ इतिधनभावविचारः ॥२॥ अथ भ्रातृभावः ॥ तत्रकिंविचार्य्यमित्युक्तंजातकाभरणे ॥ सहोदराणमथकिंकराणां पराक्रमाणांसहजाद्विचारः ॥ विचारणा जातकशास्त्रविद्भिस्तृतीयभावेनियमेनकार्या ॥ १ ॥ अन्यच्च ॥ बाहुस्तृतीयंसहजास्यमत्रत्वम्बापितृव्याम्बकमातुलादेः॥ दास्यादिकानांश्रुतिविक्रमादेर्भ्रातुः फलंवाच्यमतः सुधीभिः ॥ २॥ अथ सामान्यविचारेणभ्रातृभावस्याऽस्तिनास्तिविचारो यवनमतेन॥ सहजेसर्वपापाढ्येपापर्क्षेभ्रातरोनहि ॥ सौम्यर्क्षेसौम्यखेटाढ्येमहवःस्युः सहोदराः ॥ ३ ॥ अन्यच्च॥ सत्सम्प्रयुक्ते सहजेशुभर्क्षं दृशासतांभ्रातृसुखार्थसिद्धये॥कुजेक्षितस्तत्रशनिःसहोत्थक्षयायशुक्रेज्यदृशाशुभंस्यात्॥ ४॥स्वर्क्षेजीवेभ्रातृगेभ्रातृसौख्यंमन्दे भ्रातृस्थे तुभाग्याधिकःस्यात्॥ चाहौराहौमार्कजेदुर्नखत्वंदक्षेहस्तेदारुघातोनिलार्त्तिः ॥५॥ एवंकुजेर्केचतदस्थिभंगःस्याद्धृष्करत्वंविकृतिर्नसौम्ये ॥ सौमेन्दुदृष्टाः सहजेनवांशायावन्मितास्तत्समसोदराः स्युः ॥ ६ ॥ भानौज्यायेस्वर्क्षगेभ्रातृनाशश्चेन्नीवेदेकोनुजोराज-

तुल्यः॥दुष्टैर्दृष्टोऽज्जोऽखिलान्हन्तिवाहोज्ज्येष्ठानर्कोस्तोनुजाञ्छन्यगु-स्तान् ॥ ७ ॥ भुजेकुंजेक्रूरदशायतांकितंक्षताचपित्तादनुजेगलेरुजा॥ सशस्त्रवस्तत्रखलाभुजव्यथागरुन्मरुद्द्यूतपराबलांबलात् ॥ ८ ॥ द्यूनेर्कजेऽहोनवमेस्त्वायगेसहोत्थहानिः सहजेशनावपि ॥ बुधेज्य-शुक्राः सहजेतुतत्सुखंद्वयोःक्षयोदुष्टयुतीक्षणान्नृणाम् ॥ ९ ॥ च-न्द्रेतुभाग्ये सहजेऽर्कजश्चेद्वागोशुभैर्दृष्टयुतेतृतीये ॥ तद्वद्विनश्येद्भ-गिनीत्रयंचचिह्नंतुबाह्वोरथवापिकुक्षौ ॥ १० ॥ सोदरीराहुदृष्टेसि-तेभ्रातृगेदुर्विपात्स्याद्वचसुरतत्रचेन्मन्ददृक् ॥ सर्पभीरप्युदीर्याथ कर्णेखलेःकर्णमांद्यं परंषष्ठतुल्यंफलम् ॥ ११ ॥ अथग्रहाणांयु-तिदृष्टिफलं जातकरत्ने तत्रादौरवेःफलम् ॥ भ्रातृस्थानेस्थिते सूर्य्येभ्रातृसौख्यंनजायते॥ कुटुंबेःभ्रातृभिःसार्द्धंकलहःस्वर्क्षगेसुख म्॥ १२॥ भ्रातरश्चोत्तमा ज्ञेयाश्चत्वारोथत्रयोथवा।भगिन्योचोत्तमे द्वेचाविनिर्दिष्टंचार्भकत्रयम्॥ १३॥ क्रूरर्युक्तेथवादृष्टेमृतोभ्राताचकश्च-न ॥ भगिनीचमृताकाचिद्वंध्यावाविधवाभवेत् ॥ १४ ॥ एक द्वौवांमृतोभ्राताविपरात्रादियोगतः ॥ अपत्यदुःखंवक्तव्यंभगिन्या भ्रातुरेवच ॥१५॥ अथचन्द्रफलम् ॥ भ्रातृस्थानेस्थितेचंद्रेभ्रा-तृसौख्यंसमादिशेत् ॥ नीरोगाभ्रातरौद्वौचभगिनीत्रयमेवच ॥ ॥ १६ ॥ अथभौमफलम् ॥ भ्रातृस्थानगतेभौमेभ्रातृसौख्यं सुदुर्लभम् ॥ दृष्टेचगुरुचंद्राभ्यांभ्रातिकःस्याच्छुभप्रदः ॥ १७ ॥ भगिन्यौसुभगेद्वेच क्रूरेणनिधनंगते ॥ कुमृत्युनाभ्रातरौद्वौमृतौरा-सादिभिस्तथा ॥ १८ ॥ अथबुधफलम् ॥ बुधेचसहजस्थानेद-

ष्टिभिर्वाविलोकिते ॥ भ्रातृणांभगिनीनांचसुखंतस्यमहद्वदेत् ॥
॥ १९ ॥ भ्रातरःपंचविर्यतेशत्रुदृष्ट्यामृतिंवदेत् ॥ चतस्रःपंचवाज्ञेयाः
स्वसारः शुभलक्षणाः ॥ कुजेनशनिनादृष्टेतासांवंध्यत्वमीप्यते ॥
॥ २० ॥ अथगुरुफलम् ॥ भ्रातृस्थानेगुरोर्भ्रातृभगिनीभ्योसुखंव-
देत् ॥ भ्रातरःपंचचत्वारःक्रूरदृष्ट्याविपत्तयः ॥ क्रूरेश्वशत्रुभिर्दृष्टे
स्वल्पंभ्रातृसुखंभवेत् ॥ २१ ॥ अथभृगुफलम् ॥ भ्रातृस्थाने
भृगोःपुत्रेभगिन्योबहुलाःस्मृताः ॥ भ्रातरश्वत्रयःप्रोक्ताःक्रूरेणनिधनं
गताः ॥ २२ ॥ क्रूरेणवीक्षितेयुक्तेभ्रातरस्त्वन्यमातृजाः ॥ कश्चि-
न्नष्टोगतःकश्चित्कश्चित्तस्यचवर्त्तते ॥ २३ ॥ अथशनिफलम् ॥ तृती-
यस्थेसूर्य्यपुत्रेसिंहिकातनयेथवा ॥ भ्रातृजन्यंसुखंनास्तिदृष्टिभिर्वा-
विलोकिते ॥ २४ ॥ क्रूरैर्युक्तास्तत्रदृष्टारविराहुधरासुताः ॥ शस्त्रेणनि-
हतोभ्राताप्रत्नीचास्यासमादिशेत् ॥ २५ ॥ अथविशेषविचारः ॥
तत्रादौबांधवानांसुखदुःखविचारः ॥ यदाचतत्पतिर्जीवोथवाजी-
वोविलग्नगः ॥ बांधवानांसुखंतस्यबहुलंजायतेतदा ॥ २६ ॥ तथा
तृतीयगेमंदेसनरोभाग्यवान्भवेत् ॥ भवेद्दोपस्थितापीडाशरीरे
तस्यसर्वदा ॥ २७ ॥ सिंहिकापुत्रसंयुक्तोयदातत्रभवेच्छनिः ॥
कुर्नखित्वंकाठवातंकुर्याद्दक्षिणहस्तके ॥ २८ ॥ शुक्रोवाचंद्रमा
वापि बुधोवातत्रसंस्थितः ॥ स्वसृबाहुल्यतांतस्यकुर्वंतिहिनसं-
शयः ॥ २९ ॥ यदातत्रगताःक्रूरांबांधवास्तस्यदुःखिताः ॥ भवं-
तिकृपणाजायाभवित्रीनात्रसंशयः ॥ ३० ॥ नवमेचतृतीयेचषष्ठे
क्रूरा यदाग्रहाः ॥ भ्रातृणांचसुखंतस्यनाधिकंभविताखलु ॥ ३१ ॥
सहजस्थोयदामंदश्चंद्रेणवीक्षितोभवेत् ॥ तदाचतस्यजातस्यभार्या

दुश्चारिणींविदुः॥ ३२॥ तृतीयंपापभवनंपापग्रहयुतंयदा॥नातिसि-
द्धिर्भवेत्तस्यपुरापिपातकीमहान् ॥ ३३ ॥ चंद्रभ्रात्रीशलग्नेशाबंधौ
सौम्यास्तदानुजाः ॥ ३४ ॥ अथभ्रातृहयोगानाह ॥ अग्रेजातान्न-
विहंतिपश्चाज्जातान् शनैश्चरः ॥ जातंजातंकुजोहंतिनतिष्ठतिनजीव-
ति ॥ ३५ ॥ कुजदृष्टोसहजगोमंदोभ्रातृविनाशकृत् ॥ बुधः
सहजगोभौमवीक्षितः सहजार्तिदः ॥ ३६ ॥ धनस्थानेयदाभौमः
शनैश्चरसमन्वितः ॥ सहजेचभवेद्राहुर्भ्रातातस्यनजीवति ॥ ३७॥
कुजशनीत्रितयेसुखभेपिवासहजनाशकरोविमलोनचेत् ॥ यदि
शशीनितपेत्तविधुंतुदःसहजहानिकरोधनधान्यदः ॥ ३८ ॥
इतिभ्रातृहयोगाः ॥ अथभ्रातृसुखयोगानाह ॥ धनवान्निर्धना-
कारःकृपणोभ्रातृसंयुतः॥कुटुंबीनृपपूज्यश्चसहजेदेवतागुरौ॥ ३९॥
सहजस्थानगोदत्तेगोरांगीभगिनींभृगुः ॥ ततोजडंचक्रूरंचमंदश्च
कुरुतेनरम् ॥ ४० ॥ अथान्यद्भ्रातृहयोगाः ॥ भ्रातृगोमंदगः
कुर्याद्भ्रातृस्वसृविनाशनम् ॥ नृपतुल्यंचसुखिनंसततंकुरुतेनरम्॥
॥ ४१ ॥ भ्रातृगोहंतिवाव्यंगमथवाभ्रातरंतमः ॥ लक्ष्मेश्वरंरिष्ट
हीनंचिरंचतनुतेनरम् ॥ ४२ ॥ दिवामणौपुण्यगृहेस्वगेहेसंदेहए-
वानुजजीवितस्य ॥ एकःकदाचिच्चिरजीवितश्चेद्भ्राताभवेद्भूपतिना
समेतः ॥ ४३ ॥ अथमातृहयोगाः ॥ चंद्रमा यदिपापानांत्रि-
तयेनप्रदृश्यते ॥ मातृनाशोभवेत्तस्ययदिनोवीक्षितःशुभैः॥ ४४ ॥स
हजंप्रतिवभातिसहजस्थानगः कुजः॥ भूमिराज्यास्पदंपुत्रंदीर्घायुश्च
प्रयच्छति ॥ ४५ ॥ अस्तः पापयुतस्त्रिस्थः स्वमारंहंतिचंद्रजः॥
अर्थाल्पंविचलंकुर्य्यात्सएवाशुभवीक्षितः ॥ ४६ ॥ अन्यच्च

उदयभास्करे ॥ यदिशनिस्तनुगः कुजवीक्षितः सहजहृद्गुरुशु-
क्रदृशाशुभः ॥ यदिनिशापतिवर्गयुतोऽनुजः ३ सकुजदृक्सहजस्स-
रुजस्तदा ॥ ४७ ॥ यदिकुजानुजपोत्रिकगोहिवास्वभसहोदर
पोबुधवीक्षितः ॥ विसहजोयदिकेंद्रगतोऽनुजाधिकसुखं यदिवागु-
रुदृष्टयुक् ॥ ४८ ॥ अथभ्रातृसंख्यायोगानाह ॥ गर्गः ॥ या-
वंतोनवभागाः स्युः सहजेऽर्ककुजेक्षिताः ॥ तत्संख्याः सहजाज्ञेया
अन्यैर्दृष्टास्तुयोषितः ॥४९॥ स्वक्षोच्चगतैः खेटैः द्वित्रिगुण्यंवि-
निर्दिशेत्॥५०॥अथग्रहयोगैः संख्यामाह॥ सहजस्थोयदाराहु-
र्धनस्थानेबृहस्पतिः ॥ बुधेनचसमायुक्तस्तस्यबंधुत्रयंभवेत्
॥ ५१ ॥ कविबुधौत्रितयेहिमगुर्व्ययेभवतिसप्तसहोदरसो-
दराः ॥ ५२ ॥ सहजाचंद्रराश्यंतंगतैःखेटैस्तुसंख्यकां ॥ तृती-
यांकाद्दृष्टिवशान्मृताःपापग्रहैस्तुते ॥ ५३ ॥ अथबधिरयोगदं-
तहानियोगावाह ॥ त्रिभवकोणगतास्तपनार्कजामृतिकरानशुभा-
न्वितवीक्षिताः ॥ श्रुतिहराधनगायदितेतदादशनहानिकरानियु-
तंमताः ॥ ५४ ॥ अथतृतीयस्थरव्यादिग्रहाणांमित्रसं-
ख्यायवनेनोक्ता ॥ असंख्यमित्रःसविताप्रदिष्टोदशाधिपःशीतम-
यूखनित्यम् ॥ सहस्रमित्रःक्षितिजोबुधश्चशताधिपोदेवपुरोहितश्च
॥ ५५ ॥ अशीतिनाथोभृगुनंदनश्चसौरस्तुभौमेनसमंप्रदिष्टः ॥
स्वतुंगराशौयदिवर्तमानाःसर्वेनुपातस्यवशाद्वदंति ॥ ५६ ॥ अ-
न्यच्चशौनकः॥पुंवीर्य्येखचरेतृतीयभवनेदृष्टेचपूर्णेथवापश्चात्पुत्रस-
मुद्भवंनिगदितंपूर्वंहिकन्योद्भवम् ॥ सौरिक्षेत्रविनष्टगर्भकरणंचिन्त्या
तमंत्रीश्वरंभौमेभ्रातृविनाशनंदिनकरेक्षीयेत्ततोबांधवम् ॥ ५७ ॥

दुश्चिक्ये भृगुचंद्रमा बलयुतः पश्चात्सुशीलाः सुताश्चंद्रः पुत्रफलं तदेव कथितं भूत्यादिवृद्धिं मंदम् ॥ पुंदृष्टे सहजे ग्रहैर्यदियुते तत्पृष्ठभागे पुचसौरेगर्भविनाशनं च नियतं मंत्रीश्वरो नान्यथा ॥ ५८ ॥ यवनः । सहजगतकुजार्कौ वाक्पतिर्वा सुतेशः भवति बलयुतश्चेद्भ्रातृपश्चोद्भवेद्वे ॥ भृगुशशिशशिपुत्राः पंचमे कन्यका वा शनिभवति कदाचिज्जायते गर्भपातः ॥ ५९ ॥ सत्याचार्य्यः ॥ जीवेवाक्षितिपुत्रविक्रमगते भानौ यदा संस्थिते पश्चात्संततिपुत्रजन्म कथितं चंद्रज्ञशुक्रे सुता ॥ सौरेर्गर्भविनाशनं प्रकुरुते नीचान्विते नेष्टकचंद्राद्वा सहजे ग्रहैर्युतदृशेके चिन्नुवंतेबुधाः ॥ ६० ॥ अथ तृतीयभावे शशिफलं वृद्धयवनः ॥ आद्ये राशौ तृतीयस्थे मित्रद्विजकुलोद्भवम् ॥ परोपकारे प्रवणं बहुवित्तं नृपपूजितम् ॥ ६१ ॥ वृषे तृतीये लभते मित्रं च प्रबलं नृपम् ॥ सुवित्तं भूपशुनिधिं सुकविं ब्राह्मणानुगम् ॥ ६२ ॥ तृतीयराशौ सहजे मित्रं वैश्यं लभेच्छुभम् ॥ कृषिकृद्धर्मसंयुक्तं सुशीलं च सतां मतम् ॥ ६३ ॥ चतुर्थराशौ नितये कुर्यान्मैत्रीं द्विजैः सह ॥ शांतैः सुधर्मैः सुनयैर्देवाराधनतत्परैः ॥ ॥ ६४ ॥ सिंहे तृतीये लभते मित्रं शूद्रं वधात्मकम् ॥ वाचालं परवित्ताढ्यं प्रचंडं जनगर्हितम् ॥ ६५ ॥ षष्ठे तृतीये लभते मैत्रीं स्त्रीभिः सुशोभनैः ॥ विशेषतो धर्मरतो गुरुभक्तश्च जायते ॥ ६६ ॥ तृतीयस्थे तुलाराशौ मैत्री पापरतैर्भवेत् ॥ लौल्यैर्लौल्यकथासक्तैः कुकर्मस्थैर्निरंतरम् ॥ ६७ ॥ अलौ तृतीये भवने भवेन्मैत्री कलिप्रियैः ॥ म्लेच्छैः रौद्रैः कृतघ्नैश्च निर्लज्जैः पापसंयुतैः ॥ ६८ ॥ चापे तृतीये लभते मैत्रीं शूरैर्धनान्वितैः ॥ धर्मज्ञैः कोविदे राजसेव-

कैश्वकुपाकरैः ॥ ६९ ॥ कुंभेतृतीयेभवनेभवेन्मैत्रीक्षमाधिकैः ॥
कृतज्ञैः सत्यसंयुक्तैः सुशीलैः शास्त्रवित्तमैः ॥ ७० ॥ मीनेतृती-
येलभतेमैत्री दास्यरतैः सदा ॥ कुभक्षकैः कुशीलैश्चखलैर्गीत-
प्रियैरपि ॥ ७१ ॥ अथसहजेशस्यभावेषुफलम् ॥ सहज-
पतौलग्नगतेवाग्वादीलंपटः स्वजनभेदी ॥ सेवापरः कुमित्रोक्रूरो-
वाभवतिपुरुषश्च ॥ ७२ ॥ धनगृहगेसहजेशेभिक्षुर्विधनोऽल्पजी-
वितः पुरुषः ॥ बंधुविरोधीक्रूरेसौम्यपुनरीश्वरः सबलश्च ॥७३॥
सहजगतः सहजपतिः समसत्वंसुहृदंशुभं सुजनम् ॥ देवगुरुपूजनकं
नृपलाभपरंनरं कुरुते ॥ ७४ ॥ भ्रातृपतौतुर्यगते पितृमोदसु-
खकृदुदयकृत्तेषाम् ॥ भ्रात्रासहवैरकरं पितृपैत्रभक्षकोनरोजातः ॥
॥ ७५ ॥ दुश्चिक्येशेसुतगे सुबांधवःसतुसहोदरैःपाल्यः॥ दीर्घायु-
र्भवतिनरःपरोपकारीनिरंतरंपुरुषः ॥ ७६ ॥ षष्ठगतेसहजप-
तौ बंधुविरोधीनयनरोगीच ॥ भूलाभीभवतिभृशंकदाचिदपिरोग-
कलितश्च ॥ ७७ ॥ सहजपतौ सप्तमगेनरस्यभार्याभवे-
त्सुचररूपा ॥ सौभाग्यवती युवतिःक्रूरेदेवरगृहेयाति ॥ ७८ ॥
भ्रातृभ्रुरष्टमगःसहजमृतसोदरंनरंकुरुते ॥ क्रूरेवाहुव्यंगंपुरुषं
जीवतियथाष्टवर्षाणि ॥ ७९ ॥ धर्मगतेसहजपतौक्रूरेबंधुजितस्त
थासौम्ये. ॥ सद्बांधवश्चसुकृतिःसोदरभक्तोभवेन्मनुजः॥ ८० ॥
दुश्चिक्येशेदशमेनृपपूज्योमातृबंधुपरिभक्तः ॥ उत्तमबंधुसुमान्यो
विनिश्चितोजायतेमनुजः ॥ ८१ ॥ लाभस्थःसहजेशःसुबां-
धवंराज्यप्रियंनरंकुरुते ॥ पुरुषंबंधुषुपूज्यसेवाभिधायिनंभोग-
निरतंच ॥ ८२ ॥ व्ययगेदुश्चिक्येशेमित्रविरोधीसुबंधुसंतापी॥

दूरेवासितबंधुर्विदेशशीलंनरंकुरुते ॥ ८३ ॥ इतिभ्रातृभावः ॥ ३ ॥ अथसुहृद्भावः ॥ तत्रकिंविचार्य्यमित्युक्तं जातकाभरणे ॥ सुहृद्गृहग्रामचतुष्पदोवाक्षेत्रोयमालोकनकंचतुर्थे॥ दृष्टेशुभानांशुभयोगतोत्रभवेत्फलंध्विर्नियमेनतेषाम् ॥ अन्यच्च॥ पुरगृहेष्टचतुष्पदबंधुभूर्जनकमातृविचारणमंबुभे ॥ सुखधृतांगनजं श्वशुरं तथाकरणमत्रविचारणमंबुभे ॥ २ ॥ अन्यच्च ॥ सुखंचतुर्थक्षितिवाहनादिवापीतडागमहिभूरुहादेः ॥ क्षेत्रेष्टमित्रालयबंधुमातृवक्षःस्थलादेश्चफलंविचार्यम् ॥ ३ ॥ अथात्रसामान्यविचारेणसुखस्थानांरव्यादीनांफलानि तत्रादौरवेः फलम् ॥ गर्गः ॥ बंधून्निहंतिसवित्ता बंधुस्थानगतोनृणाम् ॥ सततंकारयेत्पापंछिन्नवाहनमेवच ॥ ४ ॥ जनयेद्बहुसौख्यानिसंग्रामेप्यपलायनम् ॥ कृशंचबहुभार्याढ्यंमानिनंकुरुतेरविः ॥ ५ ॥ अथचंद्रफलम् ॥ भृत्यभार्यावाहनानां हर्म्यवाहनसंपदः ॥ बंधौकुमुदबंधौ चेद्भवंतिसततंनृणाम् ॥ ६ ॥ अथभौमफलम् ॥ बंधुहीनंकुजोबंधौभूम्याजीवोनरःसदा ॥ प्रवासीपंकिलेदेशेभवनेवासकर्दमे ॥ ॥ ७ ॥ अथबुधफलम् ॥ बहुमित्रोबहुधनो बंधौपापंविनाबुधः ॥ नानारसविलासीचसपापेत्वन्यथाफलम् ॥ ८ ॥ अथगुरुफलम् ॥ भवंतिबालमित्राणि यस्यमित्रगतोगुरुः ॥ दिव्यमालांबरक्रीडानानावाहनयोग्यता ॥ ९ ॥ अथभृगुफलम् ॥ परदयितविचित्रीवासवासीविलासीत्रहुविधिबहुभोगीराजपूज्याश्चिरायुः ॥ वरपरिकरभार्याभार्गवेबंधुसंस्थेभवतिमनुजवर्गः सर्वदाविक्रमीच ॥ ॥ १० ॥ अथशनिफलम् ॥ भग्नासनग्रहोनित्यंविकलोदुःखपी-

डितः ॥ स्थानभ्रंशमवाप्नोतिसौरेबंधुगतेनरः ॥ ११ ॥ अथराहु-
फलम् ॥ बंधुस्थानगतोराहुर्बंधुपीडाकरोभवेत् ॥ गविकर्किणि
मेषेचसंचबंधुप्रदोभवेत् ॥ १२ ॥ अथकेतुफलम् ॥ चतुर्थभव-
नेकेतुर्मातृपित्रोस्तुकष्टकंत् ॥ अतिचिंतामहाकष्टंसुहृद्भिःसुखव-
र्जितम् ॥ १३ ॥ अथात्रसुखभवनादेवसर्वसुखंतेनविशेषतो
विचार्य्यम् । उक्तंचजातकसुधासिंधौ ॥ ग्रामेवानगरेवापिस्व-
स्थानेसौख्यकारणम् ॥ चतुर्थगैर्विलोक्यवैग्रहैर्बलयुतैःसदा ॥ १४ ॥
अथात्रसुखेशग्रहवशात् पूर्वग्रहसुखदुःखयोगानाह यवनः ॥
चतुर्थेशश्चतुर्थेवायदासूर्योव्यवस्थितः ॥ अदृष्टंचगृहंतस्यविदग्धंचा-
पिजायते ॥ १५ ॥ सोमेनवंचविज्ञेयंदग्धंभग्नंचभूमिजे ॥ चित्रं
बुधेचविज्ञेयं सुदृढंचबृहस्पतौ ॥ १६ ॥ मनोहरंतथाशुक्रे जीर्णं
राहुशनैश्चरे ॥ चतुर्थगैःप्रवक्तव्यं बलिष्ठैर्भास्करादिभिः ॥ १७ ॥
अथगृहेद्रव्यज्ञानमाह ॥ चंद्रेशुक्रेचतत्रस्थेधनंरौप्यमयंबहु ॥
प्रचुरंचतथाधान्यंरसाश्चबहुलागृहे ॥ १८ ॥ ॥ भवंतिनात्रसं
देहोलग्नेपरतोविशेषतः॥ बुधेस्वर्णगृहेतस्यजीवेरत्नान्वितंबहु १९॥
सूर्येमौक्तिकबाहुल्यं तथाकांस्येविशेषतः ॥ भौमेशास्त्रयुतंताम्रंशा-
नौलोहंतथायुधम् ॥ २० ॥ अथपित्रोः सुखदुःखयोगानाह॥
तत्रस्थैःसौम्यखेटैश्चपितुस्तस्यसुखंभवेत् ॥ मंगलश्चयदासूर्य्यश्चतु-
र्थेबलिनौयदि॥ पितृज्वरोवाव्रणकृतज्जनन्यैसमादिशेत् ॥ २१॥
शनिर्यदासचंद्रोवारविणावासमन्वितः ॥ मातुः शरीरदोषोत्थंव्य-
थांसकथयेत्सदा ॥ २२ ॥ सैंहिकेयेनसौरेणजनन्यांबांधवोमृतः
जलेनचोर्ध्वपातेनस्वात्मनावातथापिहि ॥२३॥ अथास्यपाता-

लसंज्ञा तेनकूपाऽऽकरादिविचारयोगानाह ॥प्रश्नेवाजन्मलग्नाद्वापातालेचंद्रभार्गवौ ॥ तदाकूपादिकार्येपुक्षारंतोयंविनिर्दिशेत् ॥ ॥ २४ ॥ सैंहिकेयेशनौतीक्ष्णंजीवश्चाप्यमृतोपमम् ॥ रवौभौमे च तत्रस्थेकष्टलभ्यंजलंभवेत् ॥ २५ ॥ बुधश्चसर्वकार्येषुमिश्रो मिश्रफलप्रदः ॥ अस्तंगतोयदानाथश्चतुर्थभवनस्यच ॥ शुभंफलंतदासर्वंविपरीतंभवेद्ध्रुवम् ॥ २६ ॥ अस्तंगतश्चतुर्थेशश्चतुर्थंन-चपश्यति ॥ तदापितुर्गृहंहित्वाजातोदेशांतरं व्रजेत् ॥ २७ ॥ सौम्याःसर्वेचतुर्थस्थाःपापाश्चान्यत्रसंस्थिताः ॥ तदागृहेहिजातस्य पूर्वजंधनमुच्यते ॥ २८ ॥ अथविशेषविचारो यवनमतेन ॥ स्वस्वामिशुभयुग्दृष्टंचतुर्थंमित्रसौख्यदम् ॥ संदृष्टोबुधभौमाभ्यांकुरुतेत्रसुहृत्क्षयम् ॥ २९ ॥ चंद्रादिलग्नाचरविश्चतुर्थेकुर्यात्पितृव्यस्यगृहारपदत्वम् ॥ शुक्रस्तुदाराश्रयसौख्यवृत्तं स्त्रग्वस्त्रसौभाग्यगृहंविदध्यात् ॥ ३१ ॥ बुधस्तुपत्न्याहितबंधुसौख्यं बंधौ परावासकृताधिवासम् ॥ पापान्वितोज्ञोऽन्यगृहाटनानांकुजोर्कजोदासगृहेशयानाम्॥ ३२ ॥ पापश्चतुर्थेपरवेश्मसंस्थस्तदीक्षितोऽन्यैःशुभदेरदृष्टः ॥ करोत्यसंख्यानपरोत्थतापं प्रायस्तुबंधूद्भवमेव दुःखम्॥ ३३॥गर्गः॥ जीवेक्षितेशुभंशुक्रजारदृष्टेसुहृत्क्षयः॥ सुखे क्रूरयुतेमातुःक्लेशकृत्सशुभेशुभम् ॥ ३४ ॥ अथान्ययोगानाह उदयभास्करात् ॥ अधिपसौम्ययुतेक्षितमंबुगोसुखकरोनियतंसबलं तथा ॥ अथचतुर्थलवाश्रयदुन्मितासुधदृशा हितदुन्मितमातुलाः ॥ ३५ ॥ अनृजुतुंगगतस्त्रिगुणान्मितिः भवंतितन्मूर्तिवान्विमलारतगैः ॥ अथसुखेशसमन्वशुरवेदेत्तनुसुखेहिनतःप्रियतांत-

योः ॥ ३६ ॥ अथमातृहयोगानाह उदयभास्करे ॥ सहज-
श्रापनिरीक्षितचंद्रमा विशुभदृग्जननीमरणप्रदः ॥सुख ४ ख१०यो-
श्वरिपु६व्यय १२ योःशशीखलयुतःपितृमातृहरःक्रमात् ॥३७॥
त्रिमितवर्गगणैरथवातयोःगतबलेसहजेपितथाफले ॥ विधुररौ६च
मृतौशनिराय ११ गोधरणिजोष्टसमासुविमातृकृत् ॥ ३८ ॥
यदितनौ१गुरुभूमिसुतोधने२सुररिपुःसहजेजननीहरः ॥ हरि५कु
जःप्रमदा ६ भृगुजस्तुलाशनिरगूमिथुनेचविमातृकृत् ॥ ३९ ॥
यदिखभे १० दितिजोजनकांबिकासुखहरोऽर्क १२ समासुचतौह-
रेत्॥ व्ययविधुर्यदिवैरि६खलोंचुगो ४ धरणिजश्चतदाजननींहरेत्
॥ ४० ॥ व्ययरिपुस्थखलेजननीभयंगगन १० तुर्य्यगतेश्चपितु-
र्भयम् ॥ मदनगस्तपनोनिजतुंगगस्तदपरत्रविधुर्जननीहरः ॥४१॥
अथमातृसुखयोगः ॥ विधुभतोमदने ७ यदिवाक्पतिर्भवति
चेंदुयुतोजननीसुखम् ॥ ४२ ॥ अथपितृहयोगाः ॥ रिपु ६
विधौचशनौवपुषि१ स्मरे ७ धरणिजेजनितःपितृहानिदः ॥ सुर-
रिपुर्गुरुभेरिपुगोंगगोंबुनिचवापितृहात्रिभुजा३ ब्दके॥४३॥सुररि-
पुर्व्ययगोऽवनिजःखभे १० स्मर ७ रविः पितृकष्टकरस्तदा ॥ ग-
गनगोऽवनिजोयदिवैरिभे पितृविपत्तिकरःपरथाशुभः ॥४४॥ यदि
शनिस्तनुगश्चविधोरिपौ६मदनगश्चकुजोपितृनाशकः ॥ ४५ ॥
॥ अथगंडांतः ॥ हयमघानिर्ऋतिप्रथमंघटीत्रयमहर्निशिसंधि-
सुसंभवे ॥ पितृवपुर्जननीमृतिदंक्रमात् परिणयेसूतिकृच
गमेर्थहृत् ॥ ३८ ॥ इतिगंडांतफलम् ॥ अथवंशहयोगा-
नाह ॥ तनुधनव्ययसप्तमगःखलेर्भवतिवंशविनाशकरःशिशुः ॥य-

दिचतुष्कचतुष्टयगाःखलाधन २खलश्चकुलद्रविणांतकृत् ॥४७॥
ख १० तपसो ९ हिमगुर्मदनेसितोंबुनि ४ खलोयदिवंशविनाश-
कृत् ॥ ४८ ॥ अन्यच्च ॥ तनोयमेज्जेचरिपो बुधेस्तेपितुःक्षयो-
थाकिल केन्द्रगाश्चेत् ॥ क्रूराधनेवापितथात्रिकोणेवंशक्षयायैपदरि-
द्रयोगः ॥ ४९ ॥ अथवाहनसुखयोगानाह॥सुखपतोस्वभगेसन-
वेश्वरेशुभयुतोभटपोयदिवाह्नपः ॥ वपुषिजीवदृशान्नृपपूजितोयदि
सुखेट् सुखदृग्भव ११ गस्तदा ॥ ५० ॥ अमितयानसुवाहनहर्ष-
दोयदिसुखेट्स्वभगस्तनुपान्वितः ॥ अलमचिंतितमंदिरदःसुहृत्सु-
खकरःपरधामगतोनचेत् ॥ ५१ ॥ ग्रहदाहयोगाः ॥ अथदशांबु-
खलाहियदुन्मिताखिकगताश्चनिजांत्यपसंयुताः ॥ ज्वलनदग्धगृ-
हाश्चतदुन्मितानुरतिकष्टकराःसततंमताः ॥ ५२ ॥ यदिकुजोंबु-
नि ४ वैरि ६ गृहेंबु ४ पःसरिपुदृग्गृहदाहकरोमतः ॥ यदि
कुजोयदिवारविरंबु ४ गोविभृगुचंद्रदशागृहदाहकृत् ॥ ५३ ॥
अथवाहननाशयोगानाह।अथचतुर्थखलाश्चयदुन्मिताःशुभदृशा-
रहिताहितदुन्मिताः ॥ विरतयोहितवाहनवाजिनां यदिमूर्तिव्ययगाः
सुरदर्शिनः ॥ ५४ ॥ खलखगाश्चतथायदिसप्तपोगतभलंत्रिकगः
सुखहानिदः ॥ यदिमपापविधुर्हिचतुष्टयेकृशतरः स्वदिनेर्जननी-
हरः ॥ ५५ ॥ द्विरदगोरथवच्छिविकोष्ट्रकाश्वमहिपाद्यधिपा-
रवितःक्रमात् ॥ द्विचहवोयदिसप्तमगाःखगाः स्वगृहतुंगगताःशक-
टाधिपः ॥ ५६ ॥ यदिशुभाव्ययकोशगतास्तनोतनुपता यदिवांश-
फकेंद्रयोः ॥ तनुपतिर्यदिवोचत्रिकोणभंश्रयतिमंपतियुक्शिबिकाप-
ति ॥ ५७ ॥ गुरुलपःस्वगृहचतदाष्ट्रवांस्तनुभवाधिपजीवदृशातथा ॥

यदिखगास्तनुतःप्रमदावधिंभुवपतिर्बहुभिर्जलगैस्तथा ॥५८॥ तनुगतेनृलचेकिलगीतविद्धिमकरेचतथांबुनितत्सुखम् ॥ नयनयोरसनास्पदनासिकाश्रुतिमनस्सुतथात्वचिलिंगके ॥ ५९ ॥ अधिकृतैर्बहुधार्कमुखैःसुखंदशमगैःपरथापरथाभवेत् ॥६०॥ अथसुखप्रमाणयोगानाह यवनमतेन ॥ अनंतसौख्यंसुरराजमंत्री राजाधिपःसोमसुतःसितश्च ॥ सहस्रकःशीतमयूखमालीसर्वाधिपःसूर्यशनैश्चरश्च ॥ ६१ ॥ स्वतुंगसंस्थास्त्वनुपाततश्चसौख्यानियच्छंतिसदाग्रहेंद्राः ॥ नीचाश्रिताहीनबलाभवंतिपङ्गंशुद्धाश्चयथास्वतुंगे ॥ ॥६२॥ अथतुर्यभावेराशिफलंयवनमतेन ॥ मेषेसुखस्थेलभतेनरःसौख्यंचतुष्पदैः ॥ स्त्रीभोगैरन्नपानाद्यैःस्वभुजोपार्जितैर्धनैः ॥ ॥ ६३ ॥ वृषेसुखस्थेलभतेनासौख्यंविविधैर्नरैः ॥ सौर्म्येणसेवयाराज्ञांविप्रैर्यमव्रतैस्तथा ॥ ६४ ॥ तृतीयराशौसुखगेसुखानिस्त्रीकृतानिच ॥ जलावगाहैर्वन्यैश्चबहुपुष्पांबरैस्तथा ॥ ६५ ॥ कर्केसुखस्थेलभतेजलजैरुद्भवंसुखम् ॥ बहुकूपतडागोत्थंभूम्यारामास्पदादिकम् ॥ ६६ ॥ सिंहेसुखस्थेतुसुखंभाभोतिमनुजोहठात् ॥ दरिद्रशीलवैपर्य्यात्कुमित्राद्वनसंश्रयात् ॥ ६७ ॥ कन्यागृहे बंधुग्रहेसौख्यंतुप्रमदाजनात् ॥ नृपसेवान्नपानाच उपमाद्धनसेवनात् ॥ ६८ ॥ तुलेसुखस्थेलभतेसुखंपैशुन्यजंसदा ॥ चौर्यैर्युद्धैर्मोहनैश्चतथाहास्यानुकीर्तनैः ॥ ६९ ॥ अलौसुखस्थेमनुजोजलजैस्तुलभेत्सुखम् ॥ विषशस्त्राग्निजैश्चैववननीचस्यसेवया ॥ ७० ॥ चापेसुखगतेतद्वद्धनंसंगरसेवया ॥ नृपसेवानुरक्तैश्चवचोभिर्युद्धकीर्तनैः ॥७१॥ मृगेसुखस्थेसुखमाप्तोयाचैवजलाशयात् ॥ पितोपचारैरारामा-

द्वाप्यादितटसेवनात् ॥ ७२ ॥ घटेसुखस्थे स्त्रीसंगात्सुखंचैवधनंबहु॥मिष्टान्नपानैःपुष्पाद्यैःसुवाक्यैःकपटानुगैः॥७३॥मीनेसुखस्थेतुसुखंमनुष्योप्राप्नोतिसौख्यंजलसंश्रयेण ॥ सुखंतथदेवसमुद्भवेश्वस्थानैःसुवस्त्रैःसुधनैर्विचित्रैः॥७४॥इतिराशिफलम्॥ अथसुखेशस्यभावेषुफलंवृद्धयवनः ॥ तुर्य्यपतौलग्नगतेपितृपुत्रौस्नेहंमौमिथः कुरुते॥पितृपक्षवैरिकलितं पितृनाम्नासुप्रसिद्धंच॥७५॥पातालपेधनस्थेक्रूरखगेपितृविरोधकृच्चशुभे ॥ पितृपालकःप्रसिद्धःपितालभेन्नैवतल्लक्ष्मीम्॥७६॥तुर्येशेसहजगतेपितृमातृच्छेदकंविदितपितरम्॥पित्रासहकलहकरंपितृबांधवपालकं विदितम् ७७॥तुर्यगतेतुर्यपतौपितरिक्षितिपाधिनाथमानरतम् ॥ पितृलाभपरोभवतिस्वधर्मनिरतःसुखीभवति ॥७८॥ सुतगेतुर्यगृहेशेपितृलाभाद्भोगवान्मनुजः॥दीर्घायुर्भवतिनरोक्षितिपतिसिद्धस्तुलाभदोपुत्रात् ॥७९॥हिबुकपतौरिपुसंस्थेपितृद्रव्यनाशकोपितारिवैरी॥पितृदोषकरेक्रूरेसौम्येधनसंचकस्तनयः॥८०॥अंबुपतौसप्तमगेक्रूरेश्वशुरंसुखान्नपालयति॥सौम्येपालयतिपुमान्बलयुक्तंकुलपतिंकुरुते।८१।छिद्रगतेतुर्य्यपतौ क्रूररोगान्वितंदरिद्रंवा ॥ दुष्कर्मपरंमृत्युःप्रियमथवामानवंकुरुते ॥ ८२ ॥ सुकृतेतुर्य्यपतावपिसत्संगीसमस्तविद्यावान् ॥ पितृधर्मसंग्रहकृत्पितृतीर्थापेक्षकोमनुजः ॥ ८३ ॥ पातालेशेंबरगेपापेसुतोमातरंत्यजति ॥ कन्यादयितःसौम्यैःपुनरन्यसेवाकरोपुरुषः ॥ ८४ ॥ लाभगतेतुर्य्यपतौ पितृपालकोविदेशगोवाच्यः॥ पापेतत्पतिखेटेत्वन्यपितुर्जन्मनिर्देश्यम् ॥ ८५ ॥ द्वादशगेतुर्य्यपतौमृतंपितरोवाधिदेशगोवाच्यः ॥ पुत्रस्यपापखेटे

त्वन्यपितुर्जन्मनिर्देश्यम् ॥८६॥ इतितुर्य्यभावः ॥४॥ अथसुतभावः ॥ तत्रसुतभावेकिंविचार्य्यमित्युक्तंजातकाभरणे ॥ बुद्धिप्रबंधात्मजमंत्रविद्याविनेयगर्भस्थितिनित्यसंस्थः ॥ सुताभिधानेभवनेनराणांहोरागमज्ञैःपरिचिंतनीयम् ॥ १ ॥ अथात्रसामान्यविचारेणपंचमस्थितार्कादीनांफलानि ॥ तत्रादौरवेः फलम् ॥ पंचमेस्थिरगेहेस्याद्रविःप्रथमपुत्रहा ॥ नहंतिचरगेपुत्रानन्यर्क्षेपुत्रघातकः ॥ २ ॥ अथचंद्रफलम् ॥ पंचमेरजनीनाथोकन्यापत्यमपुत्रकम् ॥ क्षीणःपापयुतोवापिजनयेच्चंचलांसुताम् ॥३॥ अथभौमफ०॥रिपुदृष्टोरिपुक्षेत्रेनीचोवापापसंयुतः ॥ भूमिजःपुत्रशोकार्त्तिंकरोतिनियतंनृणाम् ॥ ४ ॥ अथबुधफ०॥ पंचमस्थश्चंद्रपुत्रः संतानंप्रकरोतिहि ॥ अस्तंगतः शत्रुदृष्टश्चोत्पन्नस्यविनाशकः ॥५॥ अथगुरुफ० ॥ समृद्धोबहुपुत्रश्चदाताभोक्ता गुणान्वितः ॥ धनीमानीचसततंसुतस्थेदेवतागुरौ ॥ ६ ॥ अथ भृगुफलम् ॥ सुतसुखविविधोपचितपरमधनंपंडितंशुक्रः ॥ कुरुते पंचमराशौमंत्रिणमथदंडनेतारम् ॥ ७ ॥ अथशनिः ॥ सुतभवनगतोरिमंदिरस्थोसकलसुतान्विनिहंतिमंदगामी॥समुदितकिरणः स्वतुंगभस्थःकथमपिजनयेत्सुतीक्ष्णमेकपुत्रम्॥८॥ अथराहुफ० तनयंदीनमलिनंसुतर्क्षेरचयेत्तमः ॥ यदिचंद्रगृहेतस्यात्तदानीं संततिर्भवेत् ॥ ९ ॥ सिंहेकुलीरसंस्थेराहुः पुत्रेथपुत्रिणंकुरुते ॥ अन्यस्मिन्नपिराशौपुत्रविहीनोभवेन्मनुजः ॥ १० ॥ पुत्रेकेतुः प्रजाहानिः विद्याज्ञानविवर्जितः ॥ भयत्रासंसदादुःखीविदेशगमनेरतः॥ ११ ॥ तातांबिकासोदरमातुलाश्चमातामहाःपितृपिताचसू-

नु ॥ सूर्यादिखेटैः खलुपंचमस्थैर्नश्यंतिनूनंमुनयोवदंति ॥ १२ ॥
अथसुतस्थरवेरुपरिग्रहाणांदृष्टिफलानि ॥ सुतस्थानगतेसूर्य्ये
क्रूरैर्दृष्टेथवातथा ॥ सुस्थिराचभवेद्बुद्धिः प्रजास्वल्पाप्रजायते ॥ १३ ॥
लोहानलभवापीडाशनिदृष्टयाल्पत्यजा ॥ गर्भस्रावोभौमदृष्ट्यागर्भ-
पातश्चराहुणा ॥ १४ ॥ एवंद्विपाददृष्टिश्चमृतापत्यत्वकारणम् ॥
केतुनाकाकवंध्यत्वंराहुणाचानपत्यता ॥ १५ ॥ बुधेक्षितेसुते
सूर्य्येद्वौ पुत्रौपंचकन्यकाः ॥ कुजदृष्ट्यापुत्रनाशोराहुणाकन्यका-
मृति ॥ १६ ॥ केतुदृष्ट्यागर्भपातःपुंस्त्रीग्रहविचारतः ॥ क्रूराक्रूर-
विचारैश्चसंख्यानाशश्चसंततेः ॥ १७ ॥ सुतस्थानस्थितेमंदेदृष्टेवा
क्रूरखेचरैः ॥ उदरे जायतेपीडालोहजावह्निजातथा ॥ १८ ॥
अथपंचमस्थराहोःग्रहयुतदृष्टिफलानि ॥ सुतस्थानस्थितेराहौ
भार्य्यापुन्येणवर्जिता ॥ सूर्ययुक्तेसूर्य्यदृष्टेजायतेचानपत्यता ॥ १९ ॥
चंद्रयुक्तेक्षितेराहौकिंचित्सूत्यानपत्यता ॥ भौमदृष्ट्यापुत्रनाशोगर्भ-
स्रावस्तथैवच ॥ १६ ॥ बुधयुक्तेक्षितेकन्याजायतेचापिनश्यति
॥ २० ॥ गुरुणैकःशुभःपुत्रोमृतश्चैकोविवाहितः ॥ १७ ॥ भृगुणै-
कः शुभःपुत्रोजलेचैकोमृतोभवेत् ॥ सुतेर्वियोगंमंदेनकन्यैकाम्ले-
च्छगामिनी ॥ २१ ॥ इतिसामान्यविचारः ॥ अथविशेषवि-
चारः ॥ मतिसुबंधनमात्मजकौशलाध्ययनमंत्रकलासुतभाद्व-
देत् ॥ २२ ॥ अतोत्रविचारेपूर्वंमतिरुक्तातद्विचारः सूर्य्य-
जातके ॥ पंचमेर्केस्थिराबुद्धिश्चंद्रेचंचलयिसता ॥ उग्रबुद्धिर्भूमि-
पुत्रेबुधेनीविशुभामतिः ॥ २३ ॥ मृदुःपुत्रेभृगौबुद्धिर्कुटिलाराहुमंद-
योः ॥ सुदेवसेवासौम्येच बहुदेवाचपापके ॥ २४ ॥ शुभग्रहेसाधुध-

मेंप्रपंचीचाशुभग्रहे॥ युतिदृष्टिवशाद्वापिपंचमेफलमादिशेत्॥ २६॥
इतिमतिः॥ एवंशुभग्रहैर्नयवान् चाशुभग्रहैरनयवान्॥ अथात्मज-
विचारस्तत्रादौसंतानसंभवासंभवविचार जातकाभरणे॥
सुताभिधानंभवनंशुभानांयोगेनदृष्ट्यासहितंविलोक्यम्॥ संतानयो-
गंप्रवदेन्मनीषीविपर्ययत्वेहिविपर्ययःस्यात्॥ २६॥ संतानभा-
वोनिजनाथदृष्टःसंतानलब्धिशुभदृष्टयुक्तः॥ करोतिपुंसामशुभैश्चदृष्टः
स्वस्वाम्यदृष्टोविपरीतमेव॥ २७॥ अन्यच्च॥ शुभसुतभवनंशुभयुतदृ-
ष्टंसुतर्क्षमिहयेषाम्॥ तेषांप्रसवः पुंसांभवत्यवश्यंनविपरीतम्॥ २८॥
ग्रंथांतरेण॥ यावत्संख्याग्रहाणांसुतभवनगतापूर्णदृष्टिर्युतावाताव-
त्संख्याप्रसूतिर्भवतिबलयुताः पुंग्रहाः पुत्रजन्म॥ पुत्राःशुक्रश्चचं-
द्रोहिमसुतरविजोगर्भहानिंकरोतिकिंचिच्चंद्राद्विचार्य्यंमुनिवरकथि-
तंतद्विचिंत्यंनवांशे॥ २९॥ चंद्रेसुतभंपातेपुरुषांशेओजराशिके
भवति॥ सूर्य्येणदृश्यमानेबहुपुत्रभाक्क्लेशसूतिश्च॥ ३०॥
सौम्यैस्वक्षेत्रगतेपंचमभेपुत्रभाग्भवति॥ सिंहस्थितेपिचैवंनव-
मेवातृतीयभार्यायाम्॥ ३१॥ पापद्वयेनयुक्तेपंचमभवनेबहुप्रजा-
लाभः॥ चंद्रेपंचमभवनेदत्ताप्तिर्हीनवीर्य्येकेसौम्ये॥ तद्वद्विलोपप-
न्नेसुपुत्रवान्विगतरोगश्च॥ ३२॥ पुत्रेशेसुतगेवातत्स्थेखेटेवलो-
पेते॥ सत्पुत्रवान्सुबुद्धिः पुण्याचारोभवेज्जातः॥ ३३॥
इतिपुत्रप्राप्तियोगाः॥ अथसंतानसंख्यायोगानाहवैष्णवतंत्रे॥
संतानभावांकसमानसंख्यासत्संततिः सत्खचरेसुतस्थे॥ नीचो-
च्चमित्रारिग्रहस्थितानांदृष्टिःशुभानांशुभमर्मकानाम्॥ ३४॥ उद-

यभास्करे॥सुतगृहांकसमांपिचसंततिर्भवंतिवाथनवांशसमेपिवा॥ ॥ ३५ ॥ ग्रंथांतरेण। संख्यांनवांशतुल्याज्ञेयासौम्यैर्युतादृष्टा ॥ शुभदृष्टेतद्विगुणाक्लिष्टापापांशकेथवादृष्टा ॥३६॥ पंचमभवनस्वामीयत्संख्येशेभवेच्चितत्संख्या ॥ शुक्रनवांशेज्ञेयावहुलापत्यानिशुक्रदृष्टांशे ॥ ३७ ॥ अथग्रहयोगैः संतानसंख्यायोगानाहवैर्णवतंत्रे ॥ लग्नातृतीयभवनेयदिसोमसुतोभवेत् ॥ द्वौपुत्रौकन्यकास्तिस्रोजायंतेनात्रसंशयः ॥ ३८ ॥ घटशनिःसुतगः सुतपंचकीमृगशनिश्चसुतत्रयदस्तथा ॥ ३९ ॥ यदिकुजः शनिवत्रिसुतप्रदोयदिकुजः शनिवत्तनयाप्रदः ॥ ४० ॥ कर्किविधूजनुषीज्यनिरीक्षिताबुदितवत्सुतपंचकदौयदि ॥ उपखगौकेयककेवृपोपगौवहुविलंबकरौपरगौनचेत् ॥ ४१ ॥ सुतरास्वामी शुभःपापोयद्देहमनुवर्त्तते ॥ तद्देहंत्रिगुणंकार्य्यंदशाभिर्भागमाहरेत्र ॥ शेषांकतःसुतानांचसंख्यास्याद्विनितात्मजः ॥ ४२ ॥ सुरगुरुर्भवमे ११ नवमेचविधदितदाष्ट ८ सुतोवहुजीवितः ॥ त्रिरिपुकर्मकुजेमदनेगुरौनवमगेभृगुजेसुतपंचकी ॥ ४३ ॥ सुतविधुस्सुतगौचकवीज्यकौनिगमवित्सुतकल्पितवैभवः ॥ ४४ ॥ यदिचतुष्टययुग्मगताःशुभारिपुगृहा रविभौमशनैश्चराः ॥ सुतचतुर्दशकस्यपिताभवेत्सपुरुषोरमणीत्रितयोभजेत् ॥ ४५ ॥ यदितनोस्त्रितयेविधुनंदनोद्विसुवदश्चसुतात्रितयप्रदः ॥ यदिगुरुःसुतपंचकदोभृगुः त्रिसुतदश्चसुताद्वयदस्तथा ॥ ४६ ॥ अथपंचमाधिपवशेनग्रहाणांपुत्रपुत्रीसंख्यांचाह ॥पुत्रैकंदिननाथपंचमपतिः सद्वीर्य्यदृष्टिर्भवेत् पुत्राःपंचवदंतिदेवगुरुणाभौमस्तृतीयंक्रमा-

त् ॥ सौरेसप्तसुता भृगौपट्सुतावेदज्ञचंद्रेद्वयं तद्वच्चैवनवांशकं सुतगृहेसंशोधयेद्बुधतः ॥ ४७ ॥ सुतभवनसुरेज्योःपूर्णचंद्रेण दृष्टः सुगृहगतनवांशेपंचमेशुक्रदृष्टे ॥ कथयतिसुतपंचभूमिपुत्रद्व-यंवादिनकरसुतसंस्थेपुत्रमेकंविदध्यात् ॥ ४८ ॥ सौम्यःसुताम-न्विददातिधीस्थोह्यस्तंगतस्तद्विफलंकरोति ॥ सुरेज्यवीर्येसुतरा-शिसंस्थेकन्यासुतेद्वेकथितेमुनीन्द्रैः ॥ ४९ ॥ इतिसंतानयोगाः अथसंतानयोगाः ॥१ ॥ अथपूर्वपुत्रपुत्रीविचारमाह ॥ तनु १ धन २ त्रिपु ३ पंचमपेक्षितस्तनुपतिःप्रथमंसुतजन्मदः ॥ सुकु-तपंचमलाभवधूगतस्तनुपतिःप्रथमंतनयाप्रदः ॥ ५० ॥ लग्नात्पं-चमसप्तमेदिनपतिः सौरान्वितेवीर्यवानादौपुत्रमिदंचशौनकमतं पश्चाद्भवेत्कन्यका॥चंद्राद्द्वादशमान १० पंचमरविश्चंद्रेणवीर्यान्वि-तेतत्कन्याप्रथमंनजीवतिकथंपुत्रोनजीवेत्कदा ॥ ५२ ॥ अथवधू-खचरःप्रबलःसुते ५ स्मरगृहेरमणीजनिदःपुरा ॥ नरसुतेनरनाथ-कवीक्षितेप्रथममेवसुतस्यजनुर्भवेत् ॥ ५३ ॥ सुतगृहेशुभदृष्टि-युतेर्बलाद्भवतिसंततिरत्रनचान्यथा ॥ सुतगृहोनिजनाथनिरीक्षितः सशुभदृष्टयुतःसदपत्यदः ॥ ५४ ॥ द्वितनुगाविधुभौमसिताःपुरा ददतिसंततिमेवयदात्विमे ॥ धनुगतानकदाप्यथपंचमेक्षकनृदार-खगैःप्रमिताःक्रमात् ॥ ५५ ॥ द्विदेहसंस्थाभृगुभौमचंद्राःसंतानमा-दौ जनयंतिनूनम् ॥ एतेपुनर्धर्म्विगतानकुर्युःपश्चात्तथातेगदितंमहद्भिः ॥ ५६ ॥ सुतसुताःस्युरिहैवसतांशकोद्विगुणदास्त्वसतांप्रदशा-फलाः ॥ उभयथायदिमिश्रफलप्रदायदिसुतेगुरुभं ९।१२ सुतसौख्यहृत् ॥ ५७ ॥ अथकस्यामवस्थायांपुत्रप्राप्ति-

स्तदाह बादरायणसंहितायम् ॥ पुत्रंलभतेबाल्येलग्नेसंस्थः शुभश्चपश्येद्वा ॥ दशमेशुभस्तुकुर्यात् यौवनकालेनृणांपुत्रम् ॥ ॥ ५८ ॥ जायायांयौवनांते पुत्रं कुर्याच्छुभस्तुपश्येद्वा॥यदिसूर्ये शुभखेटोवार्धक्येपुत्रसंभवं कुरुते ॥ ५९ ॥ अथबहुकालांतरे पुत्रप्राप्तियोगानाह ॥सारावल्याम् ॥ भौमेविलग्नजातेचाष्टमराशिस्थितेदिनेशसुते ॥ सूर्येवाथसुतर्क्षे पुत्रःकालांतरेभवति॥६०॥ बहुग्रहसहितेलग्नेलाभसंस्थेनिशाधिपे ॥ पूर्णेगुरुसितसंस्थेःपापैः पुत्रश्कालांतरे भवति ॥ ६१ ॥ लग्नेदिनकृत्तनये अष्टमसंस्थेगुरौ चयदि ॥ भौमेपंचमराशौपुत्रंकालांतरेविंयात् ॥ ६२ ॥ अथ पुत्रप्राप्तेरन्यावधिराह ॥ यवनः ॥सुतलग्नेशदारेशलग्नेशानांयदा तदा॥संगमस्तुतदापुत्रलाभःस्यायवनोदितम् ॥६३॥ लग्नपुत्रकलत्रेशयोगेयदिदशाभवेत् ॥ सुतयुक्तर्क्षकेशेन पुत्रसिद्धिस्तदाभवेत् ॥ ६४ ॥ सुतपतिगुर्वोरथवातद्युतराश्यंशपानांवा ॥ बलसहितस्यदशायाः परिपाकेवाभवेत्सुतप्राप्तिः ॥ ६५ ॥ अन्यच्चतनुधनइत्यवाधः॥अथपंचमस्थराशिवशात्पूर्वपुत्रपुत्रीयोगानाह बादरायणसंहितायाम् ॥ वृश्चिकझषकर्कटका येषामपत्यभावमापन्नाः॥ बहुलापत्याज्ञेयाकन्यापूर्वप्रजाश्चापि ॥६६॥ कन्यावृषोमृगोश्रयेषांसुतभावगोनृणांकुर्युः ॥ कन्यानामुत्पत्तिंपुंग्रहदृष्टायुतानृणांकुर्युः ॥६७॥ घटभून्मिथुनंप्रसवेसुतभावेयस्ययोगमुपजातम् ॥ जनयतितस्यचबहुलान्पुत्रान्स्वल्पायुषोनीचान् ॥ ॥ ६८ ॥ यस्यतुलाधरराशिस्तनयस्थानेकथंचिदुद्गच्छेत् ॥ एकः श्रेष्ठःपुत्रोयद्यपिशुभगःप्रसूयतेनूनम् ॥६९॥ अथस्वल्पा-

पत्ययोगानाह ॥ धनस्थानेयदाक्रूरेक्रूरग्रहनिरीक्षितम् ॥ नपश्यतिनिजंक्षेत्रंतदाल्पप्रसवोभवेत् ॥ ७० ॥ भार्याधिपेसुतस्थे भार्यानाशोथवाल्पपुत्रोवा॥पापखगेवक्तव्यंसौम्येखेटेतुविपरीतम् । ॥ ७१ ॥ भौमेराशिवेश्मस्थेद्वितीयपाणिग्रहेसुतंविंघात् ॥ तत्रस्थेपिशशांके स्वल्पापत्योवहुस्त्रीकः॥ ७२ ॥इंदोर्वेश्मनिजीवेपुत्रस्थे दारिकाबहुलंस्यात् ॥ सौम्येचाल्पसुतत्वंशुक्रेवहुपुत्रभाक्तृतीयभार्यायाम् ॥ ७३ ॥ अथवहुकन्याप्रसवयोगानाह॥ सारावल्याम्॥ सितशशिवर्गधीस्थेताभ्यांदृष्टेथवायुक्ते ॥ प्रायेणकन्यकास्यात्समराशिगणेमितत्तथावाच्यम् ॥ ७४ ॥ चंद्रेसुतसंजातेरविगेहेदारिकाबहुलंस्यात् ॥ कन्यायांहिमरश्मौतथैववाच्यंतुहिबुकेवा ॥ ॥ ७५ ॥ एकादशेयदाक्रूरःपंचमेशुक्रशीतगू ॥ प्रथमंकन्यकाजन्ममातातस्यसकष्टका ॥७६॥ अथसंतानावरोधयोगानाह॥ सारावल्याम्॥ पापैर्बलिभिर्युक्तेपापर्क्षेपंचमेयदाराशौ ॥जातः पुरुषोऽपुत्रःसौम्यग्रहदर्शनातीते ॥ ७७ ॥ सुतपतिरस्तगतोवापापयुतःपापनिरीक्षितोवापि ॥ संततिबाधांकुरुतेकेंद्रेकोणेद्विलाभगेचंद्रे ॥७८॥ धनजनसुतहीनः पंचमस्थैश्चपापैर्भवतिहिकृतएवक्ष्मासुतेतत्रजाते ॥ दिवसकरसुतेस्याद्व्याधिभिस्तप्तदेहःसुरगुरुबुधशुक्रैः सौख्यसंपद्धनाढ्यः॥ ७९ ॥ ऋतुस्तुशुक्रोविज्ञेयः रेतोभौमःप्रकीर्तितः॥ऋतुंरेतोनपश्येत्तरेतसंनऋतुस्तथा ॥ अप्रसूतोभवेज्जातःपरिणीताबहुस्त्रियः।८०।ऋतुरेतससंपर्काज्जायतेविषमांगके॥करसंपुटमादायवंध्याभवतिनिश्चितम् ॥ ८१ ॥ अस्तंगतेपंचमेशेपापाक्रांतेचद्दुर्बले॥नापत्यंजायतेदेवाज्जातोपिम्रियतेशिशुः॥८२॥ यवनः॥

सूर्यार्केभौमैकतमाश्रितेनतद्वीक्षितेतद्गृहभावयोगे ॥ एषांगृहस्थेचकुजेऽल्पवीर्यसमुद्भवः कीर्तितमप्रजानाम् ॥ ८३ ॥ सौम्यदृष्टिविहीनेचपापैर्बलिभिरन्विते॥पापभेपंचमेतत्रह्यनपत्योभवेन्नरः॥ ॥ ८४ ॥ सुतारिरिःफगः पापःसंतानाधिपतिर्यदि ॥ पुत्राऽभावोभवेत्तस्ययदिजीवोनपश्यति ॥ ८५ ॥ ओजेसमर्क्षेऋतुरेतसंस्थेसौम्यर्कदृष्टेसुतवर्जितः स्यात्॥ ज्ञेज्येक्षितेचैवसकृत्सुतंचप्राप्नोतिवृद्धत्ववयस्थजातः ॥ ८६ ॥ ऋतुश्चकथितोभौमोरेतःशुक्रःप्रकीर्तितः ॥ यद्वर्पेपश्यतश्चौभौतद्वर्पेगर्भसंभवः ॥ ८७ ॥ लग्नेशशिनिविनष्टे सूर्यंप्राप्तेगुरौशशिक्षेत्रे॥पापैस्त्रिकोणसंस्थेःपुत्रसुखात्पूर्वमेवनिधनंस्यात्॥८८॥ पापर्क्षेपंचमेराशौपापैर्बलिभिरन्विते॥सौम्यग्रहैरसंदृष्टेपुत्राभावोभवेन्नृणाम् ॥ ८९ ॥ रिपुदृष्टोरिपुक्षेत्रेनीचेवापंचमेस्थितः॥ भूमिजःपुत्रशोकार्तंकरोतिनियतंनरम्॥९०॥इत्यादिबहवोयोगाःस्युः ॥ अथात्रदंपत्योर्मध्येकस्यपापेनावरोधस्तद्विचारोजातकरत्ने॥अपत्यसंभवंदुःखंयथापुंसस्तथास्त्रियाः॥ पूर्वजन्मकृतंकर्मद्वयोरेवततोभवेत् ॥ ९१ ॥ अथापत्यसंभवंदुःखंपंचधातदाह । वियोगान्मरणात् क्रुध्यात्तथाचाप्रसंवादपि ॥ देशांतरेचगमनात्पुत्रदुःखंहिपंचधा ॥ ९२ ॥ अथदंपत्योःपूर्वकर्मविचारणेविधिः ॥ विलिख्यनामदंपत्योःसप्तसप्तसमन्वितम्॥ त्रिभिश्चैवहरेद्भागंशेषांकेनविचारयेत् ॥ ९३ ॥ एकेनपुरुपोज्ञेयोद्वाभ्यांनारीप्रकीर्तिता ॥ शून्येस्त्रीपुंसयोःकर्ममिलितंहिनिगद्यते ॥ ९४ ॥ अन्यच्च ॥ लग्नधीस्थानतःपुंसोद्यूनधीस्थानतःस्त्रियाः॥क्रूरग्रहसमायोगादेवंदोपोविचार्यते ॥९५॥अथग्रहभावदृ-

ष्टिवशात्फलतारतंम्यमाह॥एकपादंद्विपादंचात्रिपादंसकलंचवा विचार्य्यदृष्टिंचादृष्टिंवकर्व्यंग्रहभावतः ॥ ९६ ॥ अथवंध्यायोगानाहवैष्णवतंत्रे ॥ स्वर्क्षस्थितोऽभ्रगतोयमार्कौप्रसूः त्रियंसंदिशतश्चवंध्याम् ॥ छिद्रस्थितोचंद्रबुधौसदोपांवाकाकवंध्यांदद-तोंगनांवे ॥ ९७ ॥ मृतप्रजांछिद्रगयोःसितेज्ययोःगर्भस्रवांभूमिसूतोष्टमस्थः ॥ छिद्रेश्वरेछिद्रगतेबलान्वितेपुष्पंनविंदत्यबलासुगर्भदम् ॥९८॥ अन्यच्च ॥ जातकदीपे॥ नोसूर्य्येतनुगेऽर्कजेद्युनगते वामंदसूर्य्योद्युने कर्मेदुंनगुरुःप्रपश्यतियदानोगर्भिणीजायते ॥ दृश्येऽर्द्धेरविसूर्य्यजौद्विपिविधौद्यूनेचचोग्रेस्थितोनोसूतेऽथरिपौ शनिक्षितिसूतौतोयर्क्षगौनोद्भवः ॥ ९९ ॥ सुतस्थानेत्रिपापेपुत्रिपापैर्यदिवीक्षिते ॥ उभौस्त्रीपुरुषौवंध्यौविज्ञेयौशत्रुवीक्षितौ ॥१००॥ अथमृतवत्सायोगानाह ॥ वाचस्पतिर्दिनकरःक्षितिनंदनोवानीचोविरश्मिरिपुराशिगतःसुतस्थः ॥ जातंसुतंझटितिनाशमुपैतिनूनं चंद्राह्वदंतिमुनिगर्गपराशराद्याः ॥ १०१ ॥ पंचमराशौपापोजातंजातंविनाशयेत्पुत्रम् ॥ सप्तमराशौपापोद्वेभार्य्येबादरायणेनोक्ते ॥ ॥ १०२ ॥ भौमेनराहुणावापियुक्तःस्यात्पंचमेश्वरः ॥ राहुभौमांतरस्थोवापुत्रनाशकरोभवेत् ॥ १०३ ॥ नीचस्थेशत्रुगेहेरविकिरणयुतेनिर्जितेपापयुक्ते सौम्यैर्दृष्टिविवर्जितेसुतगृहेतत्पेतथैव स्थिते॥ शुक्रेभौमेपियुक्तेविषमगृहयुतेचंद्रदृष्टयाविहीने एवंयोगद्वयेतुःसुतमृगाकरंतस्यभार्यापिवंध्या ॥ १०४ ॥ नीचारिभांशोपगतेजितेस्यात्कव्येकुजेजन्ममृतप्रजानाम् ॥ शुक्रेंदुभस्थेचसुतप्रजानांशेपांशकेशेषुमृतप्रजानाम् ॥ १०५ ॥ पापःपंचमसंस्थःपुत्र

विनाशंकरोतिबलहीनः ॥-सौम्यःशुभंविधत्तेबलसहितश्चाष्टमाधि-
पंहित्वा ॥ १०६ ॥ पंचमेनवमस्थानेचतुर्थेचयदाग्रहाः ॥ अग्रे
जाताविनश्यंतिपश्चाज्जीवंतिवैसुताः ॥ १०७ ॥ जीवेमकरंजा
तेपंचमक्षेआत्मजंमृतिंदद्यात् ॥ मीनारिस्थितेपिचैवंनवमेशुभसंस्थिते
ऽल्पजीवीच ॥ १०९ ॥ जीवस्थितस्यराशेःपंचमभेपापसंयुक्ते ॥
पुत्रविनाशंसिद्यात् सौम्यक्षेत्रंतुशुभदंस्यात् ॥ ११० ॥ राहौपं-
चमभवनेविसुतःपुण्येनपरिहीनः ॥ भौमयुतेसुतमरणंदृष्टेस्त्रीराशिके
भवेत्स्त्रीकः ॥ १११ ॥ पुत्रभावेकुजक्षेत्रेजातंजातंविनाशयेत् ॥
गुरुशुक्रयुतश्चापिनचसर्वग्रहेक्षितम् ॥ ११२ ॥ अथास्यकेन
कारणेनसंततिमरणंतदाह ॥ जातकरत्ने ॥ पुत्रस्थानादष्टमस्थे
सूर्येपीडाज्वराद्भवेत् ॥ चंद्रेचजलशीताभ्यांशस्त्रेणक्षितिनंदने ॥
॥ ११३ ॥ बुधेचशीतलादोषाद्गुरौचविपसर्पतः ॥ पक्षादिभिर्दैत्य-
पूज्येशनौबालग्रहैर्मृतिः॥ ११४॥ राहौवृक्षादिभिःकेतौविकारैःपी-
डनंभवेत् ॥ ११५ ॥ अथबालानांकस्यामवस्थायांमरणंत-
दाहजातकरत्ने ॥ प्रसवांतेमृतिः सूर्येपण्मासात्परतोऽष्टमे ॥ चंद्रे
पौगंडकेनष्टः कुजेसप्तमोमृतःशिशुः॥ ११६ ॥ विप्रोविवाहतोनष्टःकै-
शोरेचबृहस्पतौ ॥ यौवनेदैत्यपूज्येचमध्यभागात्परेशनौ॥ ११७॥
राहौगर्भमृतोबालः केतौशस्त्रैःप्रपीडितः॥ बलाबलंग्रहाणांचविचा-
र्यैवंनिगद्यते ॥ ११८॥ अथसंतानावरोधयतः पुसऔरसादि-
दशपुत्राणांमध्येकेनसुखंभविष्यति तदाहसारावल्याम् ॥ गु-
र्वर्कवर्गेपुत्रर्क्षेशुभर्क्षेवाशुभस्थिते ॥ लग्नाधिपेवासबलेनृणांपुत्रास्तु
औरसाः ॥ ११९॥ एकतमेगुरुवर्गेसुतराशावौरसोभवेत्पुत्रः ॥ ल-

ग्राचंद्रादथवाबलयोगाद्वीक्षितेपिवासौम्यैः ॥ १२० ॥ सौरर्क्षसौ-
रगणेबुधदृष्टेगुरुकुजाऽर्कदृग्धीने ॥ क्षेत्रजपुत्रंजनयतिबोधेगणेपिर-
विजयुगृदृष्टे ॥ १२१ ॥ मांदसुतर्क्षमिंदुनिरीक्षितेयदिशनैश्चरेण ॥
दत्तकपुत्रोत्पत्तिः क्रीतश्चबुधेनचैवस्यात् ॥ १२२ ॥ सप्तमभागे
*कौजेसौरयुतेपंचमेसदाभवने ॥ कृत्रिमपुत्रंविंद्यात् शेषग्रहदर्श-*
नान्मुक्ते ॥ १२३ ॥ सर्वेपंचमराशौसौरेः सूर्य्येणवात्रसंयुक्ते ॥
लोहितदृष्टेवाप्यंजातस्यसुतोधनप्रसवः ॥ १२४ ॥ चंद्रेभौमांश-
गतेधीस्थेमंदाऽवलोकितेभवति ॥ गूढोत्पन्नःपुत्रःशेषग्रहदर्शनाऽ-
याते ॥ १२५ ॥ शनिवर्गस्थेचंद्रेशनियुक्तेपंचमेसदाभवने ॥
शुक्ररविभ्यांदृष्टेपुत्रः पौनर्भवोभवति ॥ १२६ ॥ तस्मिन्नेवचभ-
वनेशशिवर्गस्थेनिरीक्षितेरविणा ॥ पुरुमस्यभवतिपुत्रःपरिविद्धश्चे-
तिमुनिवचनात् ॥ १२७ ॥ वर्गेरविचंद्रमसोः सुतगेहेचंद्रसूर्य्य-
संयुक्ते ॥ शुभेणदृष्टमात्रेपुत्रः कथितःसहोढश्च ॥ १२८ ॥ सित-
घलेसुतभेसितवीक्षितेबहुलसंततिरेवमपींदुतः ॥ सुतपनंदलवो-
न्मितसंततिर्भवतिदारयुदराचभृतोदरात् ॥ १२९ ॥ अथगर्भ-
क्षययोगानाह॥पंचमाधीश्वरस्यांशाः यावद्भिः पापखेचरैः॥वीक्ष-
तेतावतागर्भाविलीयंतेशुभैःशुभाः ॥ १३० ॥ पंचमेकादशेभौमे
शनिनानंनिरीक्षिते॥गर्भपातभवंदुःसंभृतापत्यभयंभवेत् ॥ १३१ ॥
पुत्रेकलत्रेचभवंतिपापा महीसुतोमृत्युगतोयदिस्यात् ॥ गर्भस्रवंत-
*स्यभवेचपत्न्याः ग्रहप्रमाणप्रवदंतिधीराः ॥ १३२ ॥* कर्कालि-
मीनांशगतेसुतेस्तेशुक्रेतनौसौरिसुतौ सुखंन ॥ तस्यापिपत्नींचव-
दंतिवंध्यांगर्भस्रवांपापखगेर्मदस्थैः ॥ १३३ ॥ अथैपामवरोधकर्तृ-

णांग्रहाणामुपायंबादरायणसंहितायांपूर्वंख्यादित्रयाणामु-
पायमांह।आदित्येव्रतवेदपाठकरणं जाप्यंतथाव्यंबकंचाश्वत्थंवट-
वृक्षपूजनंतथादानंचवेदोदितम् ॥सत्पुत्रंलभतेतथैवहरिवंशेनश्रुतेकें-
स्थितेनष्टेदोहरिवासरेबहुविधिंसंतर्प्ययेद्ब्राह्मणमन् ।१३४।गावःश्वेत-
हिरण्यवस्त्रसहितंमुक्ताफलैःसंयुतं पात्राणामखिलंचधान्यसंहितंदेयं
द्विजेभ्यस्तदा ॥कृत्वावेदपुराणशास्त्रविधिनाभानुर्यदापंचमेनित्यंपा-
र्थिवपूजनंव्रतकरंपुत्रर्क्षगेभूमिजे ॥ १३५ ॥ अथान्यत् ॥ हरि-
वंशेनरविःशशीशिवव्रताद्भौमस्तुगौर्य्यर्चनात् सौम्यःसंपुटकांस्य-
पात्रकनकेर्जीवस्तुपित्रर्चनात् ॥ शुक्रोगोःप्रतिपालनात्प्रकुरुते
सौरिस्तुमृत्युंजयात्कन्यादानमखाचमस्तुकपिलादानाच्छिखीसंत-
तिम् ॥ १३६ ॥ अथवंध्याद्यष्टधावंध्यानांपापनिवारणा-
र्थमुपायाः॥ बलघातीचपुरुषोमृतवत्सःप्रजायते॥ ब्राह्मण्योद्वाह-
नेतनकर्तव्यंतस्यशुद्धये ॥ १३७ ॥ श्रवणंहरिवंशस्यकर्तव्यंच
यथाविधि ॥ महारुद्रस्यजाप्यंवाकारयेचयथाविधि ॥१३८॥
एकादशस्वर्णनिष्काःप्रदातव्याश्चदक्षिणा ॥ पदान्येकादशतथादू-
र्वायाश्चाहुतिंसृजेत् ॥ १३९ ॥ स्नापयेद्दंपतीवापिमंत्रैर्वारुणदैव-
तैः ॥ एकादशपडंगैश्चरुद्रीसमभिधीयते ॥ १४० ॥ एकादशभि-
रेताभिःप्रोक्तोरुद्रोमनीषिभिः ॥ रुद्रैकादशभिश्चापिमहारुद्रःप्रकी-
र्तितः ॥ १४१ ॥ एकादशमहारुद्रैर्महारुद्रीनिगद्यते ॥ एकादश-
भिरेताभिरतिरुद्रीनिगद्यते ॥ १४२ ॥ अत्यंतोद्रस्यपापस्यनाश
सर्वस्यजायते ॥ शीतलैःसलिलैःशुद्धैर्वस्त्रपूतैःसचंदनैः ॥१४३ ॥
लक्षसंख्यैर्घटैर्भक्त्यास्नापयेचमहेश्वरम् ॥ लक्षपुष्पैरर्चयित्वाधूप-

दीपादिभिस्तथा ॥ १४४ ॥ करवीरार्कधत्तूरचंपकैर्मल्लिभिः
सह ॥ नैवेद्यंविविधंदद्यात्पक्वान्नंविविधंतथा ॥ १४५ ॥ भो-
जयेच्चमुदायुक्तश्चतुर्दशधरासुरान् ॥ चतुर्दशीव्रतंकुर्यान्निर्जलंधा-
स्त्रियासह ॥ १४६ ॥ उद्यापनंचरेत्पूर्वंपश्चाद्व्रतंसमाचरेत् ॥ ए-
कंधर्मघटंदद्याद्ब्रह्मविष्णुशिवात्मकम् ॥ १४७ ॥ एवंवर्षव्रतंकुर्या-
दपुत्रःपुत्रवान्भवेत् ॥ मृतपुत्रोपिचाप्नोति पुत्रंवैदीर्घजीविनम् ॥
॥ १४८ ॥ सुशीलांविप्रकन्यांचाप्यथाविधिविवाहयेत् ॥ स्वशक्त्या
चद्वयंकुर्याद्वित्तशाठ्यंनकारयेत् ॥ १४९ ॥ सूर्य्यवारेव्रतंकुर्यादथ-
धाजलवर्जितम् । अष्टकादिपितृश्राद्धहीनोनिःशंकघातकः। १५०।
प्राणिनामनिशंद्वेषीविप्राणांद्वेषकोपिवा ॥ भक्षकोमृगशावानांनर-
कांतेन्यजन्मनि ॥ १५१ ॥ मृतपुत्रः चर्मकीलव्याधियुक्तोभवेन्नरः ॥
दुर्मनाश्चवैजायेततस्यैवंनिष्कृतिःपरा ॥ १५२ ॥ कृच्छ्रचांद्रायणंकु-
र्याद्धोमकुष्मांडसंज्ञकम् ॥ ग्रहणेचस्वर्णदानंभूमिदानंतथापरम् ॥
॥ १५३ ॥ कन्यादानंचपंचम्यांश्राद्धंकुर्वीतयत्नतः ॥ सहस्रना-
मजापीचभवेदेवंविमुच्यते ॥ १५४ ॥ नानाग्रंथान्समालोक्यमदने-
नसुधीमता ॥ कृतोजनुःसंग्रहोयंविज्ञैःससेव्यतेसदा ॥ १५५ ॥ अन्यं-
च्च ॥ ज्ञशुक्रदोषेशिवपूजनात्सुतःशशीज्ययोरौषधयन्त्रमन्त्रतः। अ-
गोःसुतांगांशिखिनश्चयच्छतोपमारयोःस्याद्गिरिशाभिषेचनात् ॥
॥ १५६। रवेस्तुदोषेहरिवंशसंभवात्सोमेतुसन्तानमुकुंदचन्दनात् ॥
सुतोऽब्दःस्यात्क्षितिजार्कयोर्नरैकृतेविधानान्मदनव्रतेध्रुवम् १५७।
इतिदुष्टग्रहाणामुपायाः ॥ अथसुतभावेमेषादिराशिफलम् ॥
मेषेसुतस्थेलभतेमनुष्यःप्रायेणपुत्रान्विधनास्तथाच ॥ क्रूरान्सुतेना-

विकृतानपत्यान्मोहानुरक्तान्कुचरित्रयुक्तान् ॥ १५८ ॥ वृषे सुतस्थेजननेमनुष्यः प्राप्नोत्यपत्यानिमनोहराणि ॥ सुशीलयुक्तानिगुणाधिकानिप्रभाप्रमेतानिवलाधिकानि ॥ १५९ ॥ कर्केसुतक्षेजनयेन्मनुष्यः पुत्रान्प्रसिद्धान्सुतरांलसांश्च ॥ विस्तीर्णकीर्तींश्च महानुभावान्धनेनयुक्तान्विनयेनयुक्तान् ॥ १६० ॥ सिंहेसुतस्थेजनयेन्मनुष्यः क्रूरस्वभावांस्तपयेनकांतान् ॥ मांसप्रियान्स्त्रीस्वजनान्सुतीव्रान्विदेशगाजाठरक्षुधयासमेतान् ॥ १६१ ॥ कन्यायदापंचमगातदास्युःकन्यानराणांस्वजनैर्विहीना ॥ पतिप्रियापत्यपराप्रगल्भाप्रशांतकादिगुणभूषणाश्च ॥ १६२ ॥ तुलेयदापंचमगेनराणांतदासुशीलानिमनोहराणि ॥ भवंत्यपत्यानिसुरूपकांतिक्रियासमेतानिसुखोक्षितानि ॥ १६३ ॥ कीटेसुतस्थेजनयेद्वियोनोपुत्रान्मनुष्यःसुभगान्सुशीलान् ॥ आढ्यानदोषान्प्रणयेनयुक्तान्सदानुरक्तान्निजगोत्रधर्मैः ॥ १६४ ॥ चापेसुतस्थे जनयेन्मनुष्यःसुतान्विचित्राह्वयमार्गयुक्तान् ॥ धानुष्कचायानुहतशत्रुपक्षान् सेवाप्रियान्पार्थिवमानयुक्तान् ॥ १६५ ॥ मृगेसुतस्थेजनयेन्मनुष्यःपुत्रान्मृगेपापमतीन्कुरूपान् ॥ युक्तान्कुकर्मण्यनुलोमधर्मान्क्लीबस्वभावानगभीरचेष्टान् ॥ १६६ ॥ कुंभेसुतस्थे स्थिरतासमेतानगंभीरचेष्टानतिशक्तियुक्तान् ॥ पुत्रान्मनुष्योजनयेत्प्रसिद्धान्नष्टात्मजानकष्टमहाप्रभूतान् ॥ १६७ ॥ मीनेसुतस्थेललनानुरक्तान्पुत्रान्मनुष्योलभतेऽल्पवीर्यान् ॥ रोगान्वितान्पापरतान्सुरूपान्सहास्यतांस्त्रीवशगान्सदेव ॥ १६८ ॥ अथसुतेशस्यभावफलम् ॥ लग्नगतःपंचमपःप्रसिद्धमस्तोकतन-

यपरिकलितम्॥शास्त्रविदंगीतविदंसुकर्मनिरतंनरंकुरुते ॥१६८॥ पंचगपतिर्धनस्थःक्रूरःखचरोधनोज्झितंकुरुते ॥ गीतादिकाव्यकलितंकष्टभुजंस्थानप्रचुरंच ॥ १६९ ॥ तनयपतिःसहजगतः समधुरवाचंसुबंधुजनविदितम्॥कुरुतेसुतांस्तदीयांस्तनयापालयतितद्बंधून् ॥ १७० ॥ पातालेपंचमपः गुरुभक्तिरतंपितृकर्मनिरतंच॥ पुरुषंजननीभक्तंकुरुतेक्रूरस्तुविपरीतम्॥१७१॥तनयगतस्तनयपतिर्मतिमंतंमानिनंवचनकुशलम् ॥ सुतकलितंप्रचुरधनंख्यातियुतंमानवंकुरुते ॥ १७२ ॥ पंचमपतिस्तुषष्ठेशत्रप्रियमात्मजैर्हीनम्॥रोगयुतंधनरहितंक्रूरःखचरःकरोतिक्रूरतरम् ॥ १७३ ॥ तनयपतौसप्तमगेसुप्रसूताशुभगाथदेवरता ॥ गुरुभक्ताप्रियवचनासच्छीलातस्यजायतेदयिता ॥ १७४ ॥ सुतपेनिधनगृहस्थेकुत्सितवाङ्गिरालयोमंदः ॥ नष्टाप्त्यंगाःसहजास्तनयाअपिसंभवंतितथा ॥ ॥ १७५ ॥ सुकृतस्थस्तनयपतिःसुबोधविद्याढ्यगीतरतम् ॥ नृपपूजितंस्वरूपंनाटकरसिकंनरंकुरुते ॥ १७६ ॥ तनयपतिर्नृपगृहगोनृपकर्माणंनृपाकलितम् ॥ सत्कर्मरतंप्रवरंजननीकृतसुखाशनंकुरुते ॥ १७७ ॥ सुतनाथेलाभगतेशूरःसुतवान्सुकृत्यकृद्भोगी ॥ गीतादिकलासुकलितोनृपलाभीजायतेमनुजः॥१७८॥ पंचमगेद्वादशगेक्रूरेसुतरहितःशुभेससुतः ॥सुतसंतापकृन्नोविदेशगमनोयतोमनुजः ॥ १७९ ॥ इतिपंचमभावः ॥५॥ अथ रिपुभावः॥ तत्ररिपुभावेकिंकिंचिंत्यमित्युक्तंजातकाभरणे ॥ वैरिभीतिक्रूरकर्मामयानांचिंतारंकामातुलानांविचारः ॥ होरापारावारपारप्रयातैरेतत्सर्वंशत्रुभावेविचिंत्यम् ॥ १ ॥ अत्रचंद्रसो-

म्यषष्ठस्वामीलग्नेशावास्थितिः शत्रुवृद्धिरोगकुबुद्धिहेतुः चात्रक्रूरा रिपुघ्नाः ॥ इतिज्ञेयम् ॥ अथारिभावेग्रहस्थितिफलम् ॥ षष्ठेभावेस्थितेभानावतिकामोदरानलः ॥ बलीख्यातगुणोभूपोदंड- नेताथवाभवेत् ॥ २ ॥ लग्नात्षष्ठस्थितेचंद्रेमृदुकायःस्मरानलः ॥ अनेकारिर्भवेत्तीक्ष्णोरिष्टंस्यान्मृत्युरेवच ॥ ३ ॥ बहुदाराग्निपुंस्कः स्यात्सुकार्य्योबलवान्कुजे॥ स्वबंधुविजयीजातःप्रधानश्चरिपुस्थिते ॥ ४ ॥ विवादीकलहीव्याधियुतोनिष्ठुरवाग्भवेत् ॥ नरपालस्य शत्रुःस्याल्लग्नात्षष्ठस्थितेबुधे ॥ ५ ॥ स्वल्पोदराग्निपुंस्कःस्यात् स्त्रीजितोरिपुहागुरौ ॥ लग्नात्षष्ठस्थितेजातोदुर्बलोऽलससंयुतः ॥ ॥ ६ ॥ भीरुर्भूरिरिपुःक्षीणामनिष्टोविभवेप्सितः ॥ विक्लवश्चभवे- ल्लग्नाद्भार्गवेरिपुराशिगे ॥ ७ ॥ विद्वेषीपक्षक्षपितःशूरोविषमचेष्टि- तः ॥ बह्वाशीबहुकाव्यश्चारिदाहोरिपुगेशनौ ॥ ८ ॥ शूरःशुभगः प्राज्ञोनृपतुल्योजायतेमनुजः ॥ रिपुभवनस्थेराहुर्जनमान्योऽति- विख्यातः ॥ ९ ॥ अन्यच्च ॥ रिपुंकुर्य्यात्कुजःषष्ठेविलग्नाचनि- रीक्षितः ॥ सौम्ययुक्तेक्षितेभौमेनात्यंतमरिजंभयम् ॥ १० ॥ षष्ठे पापाक्रांतेशत्रुभयंभवतिनियमेन ॥ सौम्याक्रांतेसौम्येक्षितेक्षिति- तनयेभवतिशत्रुमित्रत्वम् ॥ ११ ॥ यथाहयवनः ॥ षष्ठाश्रितेऽ- र्केविपशत्रुदाहःक्षुद्रोपशत्रुव्यसनोपनाशम् ॥ काष्ठाश्मघाताद्विवि- कीर्णदेहःश्रुतोष्ठवाग्दंतनखक्षतांगम् ॥ १२ ॥ जलोदरेणामयजैर्वि- कारैश्चंद्रोबुजैर्वाकफतप्तदेहः ॥ शरावशोचक्षयरोगकृत्स्यादत्रैवसू- र्य्येणविमिश्रमूर्तिः ॥ १३ ॥ मीनांशकेमेषगृहांशकेवाचंद्रःस्थि- तोत्रैवहिपापदृष्टः ॥ किलासकुष्ठादिविनष्टदेहमिष्टेक्षितेकंडुविकारि-

णंच ॥ १४ ॥ षष्ठेश्वरेवृश्चिककर्कटांशेकुजेक्षितेगुह्यरुगार्दितांगः ॥
सौरेक्षितेमारुतशोणितार्थादृहृद्रोगिणंसूर्यग्रहांशकस्थः ॥ १५ ॥
शस्त्रप्रहाराग्निरुगग्निदाहप्रतप्तमिंदुक्षितिसूनुयुक्तः ॥ सौरेतुषष्ठेशविमि
श्रमूर्तिर्निहंतिवाताश्मचतुष्पदाद्यैः ॥ १६ ॥ कुजोह्यसृक्शस्त्रप-
रिक्षतांगंदेशादनेवानृपदर्शनेच ॥ सारंशिरोऽश्मावनिवातपातभृगु-
ज्यपातोपहतंचकुर्यात् ॥ १७ ॥ बुधेक्षितः प्रस्खलितः प्रपात
लोष्टाहतांगंजितविद्विपंच ॥ ख्यातंरिपुद्वेषभवप्रसक्तमस्वस्थदेहं
भृगुसूनुजीवौ ॥ १८ ॥ त्रिकोणकेंद्रोपगतैस्तुसौम्यैः पापा यथो-
क्तंविनिवर्तयंति ॥ पापेक्षितास्तेतुशुभांशसंस्थाःकुर्वंतिमृत्युंविक-
लांगकंवा ॥ १९ ॥ क्षेत्रेगृहेशतुल्यासंख्यातेषांविनिर्दिशेत्प्राज्ञः॥
भावाध्यायेविहिताद्विस्ताराच्चिंतयेच्छेषम् ॥ २० ॥ गर्गमतेन॥
रिपुंहंतिसहात्रांशुः शत्रुः सोपचयेयदि ॥ शत्रुभिर्दृष्टयुक्तोवाबहून्
शत्रून्प्रयच्छति ॥ २१ ॥ निधनंकुरुतेचंद्रः पापर्क्षपापसंयुते ॥
पूर्णः षष्ठेरिघातीचगुरुगेहगतोयथा ॥ २२ ॥ षष्ठेनीचारिभवनेसंन्या-
संकारयेद्बुधः ॥ वर्द्धयेत्त्वन्यथाशत्रुंपुंसांधरणिनंदनः ॥ २३ ॥ रिपून्
विजयतेसौम्यः सौम्यैर्दृष्टोथवायुत ॥ नीचःमातश्चवक्रश्चषष्ठर्क्षरिपु-
रिष्टकृत् ॥ २४ ॥ स्वगेहेशुभगेहेवाषष्ठेगुरुरमित्रहा ॥ शत्रुगेहेऽरि-
णादृष्टेशत्रुपीडांददातिसः ॥ २५ ॥ नीचास्तगामीरिपुमंदिरस्थः
करोतिवैरंकलहागमंच ॥ अन्यत्रशुक्रोरिपुदर्पहारीस्वर्क्षेतुषष्ठेतु-
स्तरातिसिद्धिः ॥ २६ ॥ षष्ठेनीचगतेसौरिर्जनयेन्नीचवैरिणाम् ॥
अन्यथावैरिणंहंतिनिर्वैरंस्वगृहेगतः ॥ १७ ॥ राहुः श-
त्रुग्रहेकुर्याच्छत्रुसंग्राममूर्द्धनि ॥ हंतिसर्वान्यरिष्टानिसर्वग्रहनि-

रीक्षितः ॥ २८ ॥ सौम्यैः वित्तपसंयुक्तेपष्ठेद्विशुभवीक्षिते ॥ विज-
योनामयोगोऽयमाहवेवाहनायुधैः ॥ २९ ॥ पष्ठेक्रूरा नरंकुर्य्युः
शत्रुपक्षक्षयंकरम् ॥ सौम्याः पष्ठेमहारोगंपष्ठेचंद्रस्त्वरिष्टदः॥ ३०॥
अन्यच्च॥ चंद्रोवाभार्गवोवापियदाजीववुधौतथा ॥ सबलौशत्रुगौ
स्यातांतदास्याद्गोधनंवहु ॥ ३१ ॥ बहवोवृपभास्तस्यसंभवंति
गृहेसदा ॥ मार्तंडोमंगलोवापियदितत्रभवेत्किल ॥ ३२ ॥ तदा-
जगवकंस्वंस्याद्गौरवंपशुवंधनम् ॥ तत्सर्वंभवितागेहेउष्ट्राणांचगणै-
र्युतम् ॥ ३३ ॥ बलिष्ठेचतथाराहौशनौकेतौतथैवच ॥ महिपाणां
धनंतस्यवहुलंजायतेगृहे ॥ ३४ ॥ सैंहिकेयः शनिश्चैवमातुलेभ-
वनेस्थितौ ॥ प्रजाहीनोमातुलः स्यात्कन्यापत्योऽथवातदा ॥ ३५ ॥
गुरुर्भृगुःशशांकोवारिपुगेहेयदाभवेत् ॥ तदाभ्रातृस्वसॄणांचमातु-
लानांमहासुखम् ॥ ३६ ॥ चंद्रशुक्रवुधैर्वाच्यंकन्यापत्योथमातुलः ॥
जीवेनपुत्रसंयुक्तः सुखीचसधनः सदा ॥ ३७ ॥ यस्यजीवोभवेत्पष्ठेभ-
वनेतेजसायुतः॥शुभंतस्यप्रवक्तव्यंजातस्यपृच्छकस्यवा। ३८।सौम्य
योगेक्रूरदृष्टौनसुखंमातुलस्यच।तस्यवंशोद्भवःकोपिगतोदेशांतरेमृतः
॥ ३९ ॥ भ्रातृधर्मारिपुक्रूरैःस्वल्पंभ्रातृसुखंभवेत् ॥ ४० ॥ राहुयुक्ते
धरापुत्रेवुधयुक्तावलोकिते॥मातृष्वसामृतापत्यारंडादेशांतरंगता ॥
॥ ४१ ॥ उदयभास्करात् । यदिरिपौपतिसौम्ययुतेक्षितेरिपु-
रुजोभवतिपरथानचेत् ॥ सखलुवैरिपतिस्तनुमृत्युगोव्रणकृदेवमथ
स्वजनेष्वपि ॥ ४२ ॥ यदिकुजार्कसुतौरिपुगौतदास्वगददोमदि
तुंगगतौरिपो ॥ नरतनौरिपुतोपिचगूढरुग्यदिखलाढ्यविधुर्वपुपि
प्ररुक् ॥ ४३ ॥ शिरसिभानुरनुष्णगुराननेधरणिजश्चगलेहृदयेवुधः॥

सुरगुरोचकटौभृगुरीक्षिगोथइनजश्चरणाम्बरपोस्ततः ॥ ४४ ॥ तनुपतिर्यदिभौमबुधर्क्षगःकुजबुधेक्षितकोक्षिविनाशनः ॥ अरिपतिस्तनुगोरिहरोधनेसुतगृहीतधनःकुमतोऽनुजे ॥ ४५ ॥ नगरदुःखनिधिर्दहनाभिरुग्यदिलयांगपतीरिपुसंस्थितो ॥ भवतिदक्षिणनेत्ररुजायदाशनिकवीपदरुग्यदिदानवः ॥ ४६ ॥ अधरदंतरुजाथ शिखीरिपौतनुपतिर्यदिवाशुभवीक्षितः ॥ कुजबुधर्क्षगतोपिचकुत्रचित्किलतदासनकार्धरुजान्वितः ॥ ४७ ॥ अथषष्ठस्थितानां खगानामवधिवर्षाण्याह हिल्लाजः ॥ सूर्य्यस्त्रिनेत्र-२३ शरदिस्वमरौहिमांशुर्मृत्युंकुजो २४ जिनमितेप्रददातिपुत्रम् ॥ सत्रिके ३७ विदरिभंमृतिमीज्यकोखाब्धौ ४० शत्रुभिःसितइलायम २१ शस्त्रमृत्युम् ॥ ४८ ॥ यवनः ॥ दशाधिपस्तीक्ष्णकरःप्रदिष्टःसहस्रनाथोरजनीकरश्च ॥ वक्रार्कजोहीनपरोसदैवदोपाणिचंद्रेणसमाश्चतुंगाः ॥ ४९ ॥ अथरिपुभावेराशिफलम् ॥ वृद्धयवनः ॥ मेषेरिपुस्थेप्रभवंतिपुंसांचतुष्पदास्तीक्ष्णतराःसुरौद्राः ॥ तच्छत्रवोम्लेच्छसमुद्रवाश्चकार्य्यंविनाचैवनरस्यलोके ॥ ५० ॥ चतुष्पदार्थंप्रभवेच्चवैरंसदानराणांवृषभेरिपुस्थे ॥ असत्यमार्गेणतथांङ्गनानांसङ्गान्नितांतंनिजबंधुवर्गे ॥ ५१ ॥ तृतीयराशोरिपुगेनराणांवैरंभवेत्स्त्रीजनितंसदैव ॥ तथानराणांसहितंचपापैर्चणिग्जनैर्नीचजनानुरक्तैः ॥ ५२ ॥ कर्केरिपुस्थेगृहसंभवंचभवेन्मनुष्यस्यसहोदरस्य ॥ समंद्विजेंद्रेणनराधिपैश्चमहाजनैनैवपरानुरोधात् ॥ ५३ ॥ सिंहेरिपुस्थेभवनेचवैरंपुत्रैःसमंबंधुजनेननित्यम् ॥ धनोत्थमार्तस्यविनिर्जितस्ययदामनुष्यस्यवराङ्गनाभिः ॥ ५४ ॥

कन्यास्थितेशत्रुगृहेस्ववैरंसमंसुताभिःप्रभवेन्नराणाम् ॥ दुश्चा-
रिणीभिश्चसदांगनाभिर्वेश्याभिरेवात्रगतत्रपाभिः ॥ ५५ ॥
तुलाधरेशत्रुगृहेनरस्यनिधिस्थितिस्थंप्रभवेच्चवैरम् ॥ कथंसुधर्म-
स्यनरस्यसाधोःस्वबंधुवर्गाच्चनिजालयाच्च ॥ ५६ ॥ कौर्प्ये
रिपुस्थेप्रभवेच्चवैरंकार्यंसुधर्मस्यनरस्यकुर्यात् ॥ सार्द्धंद्विजेंद्रै-
श्चसरीसृपैश्चव्यालैर्मृगैश्चोरगणैर्नराणाम् ॥ ५७ ॥ चापेरिपुस्थे
प्रभवेच्चवैरंशूरैःसमेतंचसरावकैश्च ॥ सदामनुष्यैश्चहयैर्गजैश्चपुनस्त-
थान्यैःपरिवंचनैश्च ॥ ५८ ॥ मृगेरिपुस्थेप्रभवेच्चवैरंसदानराणां
धनसंभवंच॥मित्रैःसमंसाधुमहाजनेनप्रभूतकालंगृहसंभवेन ॥५९॥
कुंभेरिपुस्थेचतथार्थहेतोर्नराधिपेनैवजलाश्रयैश्च ॥ वापीतडागादि-
भिरेवनित्यंक्षेत्रादितोन्यैःपुरुषैःकुवन्यैः ॥ ६० ॥ मीनेरिपुस्थेच
भवेन्नराणांवैरंचनित्यंसुतवस्त्रजातम् ॥स्त्रीहेतुकंस्वीयतयापुराणाम-
पिश्रयाणामितरेतरंच ॥ ६१ ॥ अथषष्ठेशभावफलम् ॥
षष्ठेशेलग्नगतेनीरुग्निरुत्सवकुटुंबकष्टकरः ॥ बहुपक्षेरिपुहंताप्र-
वतिनरःस्वैरवचनधनः ॥ ६२ ॥ षष्ठपतौद्रविणस्थेदुष्टश्चतुरोहि
संग्रहवान् ॥ स्थानप्रवरोविदितःसव्याधिस्तनुजहाद्वित्तः ॥ ६३ ॥
षष्ठपतिःसहजस्थःक्रूरःकुरुतेस्वलोककष्टकरम् ॥जनकरमारमणम-
तिंत्वतिकष्ठग्रामहस्तस्य ॥ ६४ ॥ षष्ठाधिपतिस्तुर्येपितृतनयौ
वैरिणौमिथःकुरुते ॥ शंकरजसुतःपितृतोलक्ष्मींलभतेसुचिरतरः
॥ ६५ ॥ रिपुभवनपतौसुतगेपितृसुतयोर्वैरितामृतिकृत् ॥ क्रू-
रेशुभेचनिधनःपदवींदुष्टश्चतत्फलति ॥ ६६ ॥ रिपुभवनपेरिपुस्थे
नीरुग्वैरंसुखीकृपणः॥ नहिजन्मतोऽपिसीदतिस्थानकवासीभवेन्म

नुजः ॥ ६७ ॥ अहितपतौसप्तमगेक्रूरेभार्य्याविरोधिनीचंडा ॥ तापकरीत्वथसौमेवंध्यावागर्भपतनपरा ॥ ६८.॥ रिपुपतिर्मूर्तिभे गृहिणीमृतिर्विपधराचकुजोविपतौबुधः ॥ सपदिचंद्रइनोर्नृपसिंहयोःकविगुरूरिपुलोचनयोरुजम् ॥६९॥ शनेर्ग्रहणिकारुजावातदोपतःस्त्रीमृतिः ॥ शत्रुपतिर्यदिनवमेक्रूरःखचरस्तदाभ्रष्टः ॥ विबुधविरोधीक्रूरोनमन्यतेयाचकंचगुरुम् ॥ ७० ॥ अरिगृहपेदशमस्थेक्रूरेमातरिरिपुस्तदादुष्टः ॥ धर्मसुतपालकमतिर्मातुर्द्वेपीभवेन्मनुजः ॥ ७१ ॥ वैरिपतिर्लाभगतेक्रूरेमरणंविपक्षतोभवति ॥ तस्करकृताचहानिःस्याच्चतुष्पदाल्लाभवान्मनुजः ॥ ७२ ॥ षष्ठपतौ द्वादशगेचतुष्पदधनधान्ययुतःसदामनुजः ॥चपलोमदांधलक्ष्म्या लक्ष्म्याह्लादपरोनरोभवति ॥ ७३ ॥ अन्यच्च ॥ शत्रुभनाथःशत्रुगृहेचेज्ज्ञातिविरोधःस्यात्सहजोस्य ॥ अन्यजनैःसत्सौहृदवृद्धिर्यानयुतःसद्धीनजनर्द्धिः॥ ७३ ॥शत्रुभनाथेसप्तमआयेवातनुगेहेसाहसवान्स्यात् ॥ पुत्रविहीनोमान्यउदारःसद्गुणकीर्तिर्द्रव्यसमेतः॥ ७४ ॥ शत्रुभनाथेरिःफमृतिस्थेरोगनिशांतकोविदवैरी ॥ प्राणिविहिंसातत्परचित्तोथोपरदारासक्तमनस्कः ॥ ७५ ॥ शत्रुभनाथेभाग्यगृहस्थेदारुशिलादेर्विक्रयकर्ता ॥ संव्यवहारेकापिचहानिःकापिच वृद्धिश्चन्द्रकलावत् ॥ ७६ ॥ शत्रुभनाथेव्योम्निधनेवामाहसयुक्तोवंश्यजनाग्र्यः ॥ कर्मसुनिष्ठावान्सुरसयुक्तोनकनिवासःप्रोक्तनिरुक्तः ॥ ७७ ॥ शत्रुभनाथेभ्रातरितुर्येवातिरुपास्याल्लोहितनेत्रः॥ वापिशुनोद्वेपीचलचित्तोवित्तसमेतःकापिमनस्वी ॥ ७८ ॥ शत्रुभनाथेपंचमगेहेचंचलमित्रद्रव्यसुखाढ्यः ॥ प्रीत्यनुकम्पावानति-

सौम्यःस्यान्निजकार्यऽसौनिपुणोपि ॥ ७९ ॥ इत्येवंरिपुभाव विचारः ॥६॥ अथसप्तमभावस्तत्रकिंविचार्य्यमित्युक्तंजात काभरणे॥रणांगणश्चापिवणिक्क्रियाश्चजायाविचारोगमनंप्रयाणम् ॥ शास्त्रप्रवीणैर्हिविचारणीयंकलत्रभावेकिलसर्वमेतत् ॥ १॥ अत्रचंद्रसौम्यकलत्रेशलग्नेशावस्थितिःकलत्रप्राप्त्यादिहेतुः उक्तंचजातकरत्ने ॥ लग्नाचंद्राच्चवीर्याढ्यंकलत्रंसप्तमंयदि ॥ स्वेशसौम्येक्षितंयुक्तंस्त्रीप्राप्त्यैचान्यथानहि ॥ २ ॥ लग्नेंद्वोर्मदने ७ सितेंदुसहितेदृष्टेथतद्वेगणेस्त्रीबाहुल्यमितिज्यवित्कुजलवेचैकामृतिः सोग्रके ॥ व्यंगाधी ५ युन ७ धर्म ९ भेसहितयोःशुक्रार्कयोःस्यात्प्रियासप्तांत्यो ७।१२ दयगैःखलैःक्षयविधौपुत्रे ५ सुतस्त्रीवियुक् ॥ ३ ॥ अथसामान्यविचारेणमदस्थरव्यादीनांफलानि तत्र सूर्यफलम् ॥ युवतिभुवनसंस्थेभास्करेस्त्रीविलासीनभवतिसुखभागीचंचलःपापशीलः ॥ उदरसमशरीरोनातिदीर्घोनह्रस्वोकपिलनयनरूपःपिंगकेशःकुमूर्तिः ॥४॥ चंद्रफलम् विमलवपुषिचंद्रेसप्तमस्थेमनुष्योरुचिरयुवतिनाथोकांचनाढ्यःसुदेही ॥ शशिनिकृशशरीरेपापगेपापदृष्टेनभवतिसुखभागीरोगिपत्नीपतिःस्यात् ॥ ५ ॥ भौमफलम् ॥ मुनिगृहगतभौमेनीचसंस्थेरिगेहेयुवतिमरणदुःखं जायतेमानवानाम् ॥ मकरगृहनिजस्थेनान्यपत्नीश्चधत्तेचपलमतिविशालांदुष्टचित्तांविरूपाम् ॥६॥ बुधफलम् ॥ तुरगभावगतेहरिणांकजेभवतिचंचलमध्यनिरीक्षितः ॥ विपुलवंशभवःप्रमदापतिःसचभवेच्छुभगेशशिवंशजे ॥ ७ ॥ गुरुफलम् ॥ युवतिमंदिरगेसुरयाजकेनयतिभूपतितुल्यसुखंजनः ॥ अमृतराशिसमानव-

चाःसुधीर्भवतिचारुवपुःप्रियदर्शनः ॥ ८ ॥ भृगुफलम् ॥
युवतिमंदिरगेवसतेनरोबहुसुतेनधनेनसमन्वितः ॥ विमलवंशभवः
प्रमदापतिर्भवतिचारुवपुर्मुदितःसुखी ॥ ९ ॥ शनिफलम् ॥
विश्रामभूतांविनिहंतिजायांसूर्यात्मजःसप्तमगश्चरोगान् ॥ धत्तेपु-
नर्दंभधरांगहीनांमित्रस्यवंशोनुचितासुहृत्तच ॥१०॥ राहुफलम् ॥
जायास्थराहुर्धनहानिजायांददातिनार्योविविधांश्चभोगान् ॥ पापा-
नुरक्तांकुटिलांकुशीलांददातिशेषैर्बहुभिर्युतश्च ॥ ११ ॥
अन्यच्च॥ स्यात्सप्तमंवस्तिरिहांगनादेर्वादप्रपायानवणिक्क्रियादेः॥
अन्योन्यमिष्टार्थफलं नृनार्योः पितामहादेश्च फलंविचार्यम् ॥
॥१२॥ शुभेशुभंस्यादशुभेनशोभनं गुरौसितेऽब्जेचबलान्वितेंगना ॥
सुवर्णवर्णाविदिनीलभाकुजेसुशोणभाश्यामतराशनावगौ ॥ १३ ॥
सूर्येज्ञेयाकालजीर्णाज्ञविध्योर्बालाशुक्रेयौवनाढ्याकुजेपि ॥ पू-
ज्येरम्यासूनुसूःसद्गुणास्याद्वृद्धेवस्यादर्कजेगोचजाया ॥ १४ ॥
क्लीबाराहोयाशनौस्त्रीस्वभावाशुक्रेऽब्जेचान्येपुसापुंस्वभावा ॥सौम्ये
र्युक्तंसौम्यभंसौम्यदृष्टंश्चशुभपक्षात्स्यात्सुसंचान्यथान्यत् ॥ १५ ॥
वर्गेसितस्यसितदृग्यदि तत्रपत्न्योबह्व्यःसुखायगुरुभेतुमतेकपत्नी॥
नीचेसितेपिविधुपूज्यसितर्क्षक्षेत्रशुकारदृष्टिसहितेवनितासगर्वा ॥
॥१६॥ यूनेयमेस्त्रूजितदीक्षणतश्चवातार्ताचंचलासरुधिराकटिचि-
ह्नयुक्ता ॥ साब्जेकुजेमृतिमुपैत्युदरामयेनाक्यग्वोर्जलक्रिमिरु
जापशुडाकिनीभिः ॥ १७ ॥ यूनेशुभैःसुमदनोथखरस्मरोन्यैः
क्लीवैर्नपुंस्त्वमगुनातुनदारयोगः ॥ चेत्स्यान्प्रियेतशुभदृष्टयुतेविल-
ग्नाद्रन्ध्रेर्कजेऽस्त्रजिमदेवनिताद्वयंस्यात् ॥ १८ ॥ चन्द्रदृक्-

चेन्मदेचञ्चलाचावलाजीववर्गेज्ञयुग्दृष्टइन्दौतथा ॥ आर्क्यसृ-
ग्वर्गयोस्तत्रतद्वग्यदादम्पतीचञ्चलैचेतिसितोन्यारतः ॥ १९ ॥
मन्देन्द्वारायुक्तदृष्टाविधुर्वामध्येऽसृक्शन्योस्तयोःपुंश्चलत्वम्
सौम्यांशेवाधूनपेसौम्यदृष्टे वेश्याकाराकामिनीस्यान्नरस्य ॥ २० ॥
लग्नस्मरव्ययगताअशुभाःसुतेऽब्जेक्षीणेथवाखलभगेचनतद्विवाहः ।
षष्ठेव्ययेवपुपिवाज्ञरवीतदैकाकोणेयुनेचविकलैवयदासितारौ ।
॥ २१ ॥ गण्डान्तर्क्षेयूनगेवासितेंगेमन्दे बन्ध्येशः सुतर्क्षेनसच्चेत् ॥
पापाःकामेऽब्जात्तनोर्वानसन्तोमन्देन्द्वोर्यूनेपुनर्भूपतिःस्यात् ॥ २२ ॥
भार्याःस्युर्यूनेशनन्दांशसंख्याःखेटेक्षातुल्याश्चगोशेज्ञशन्योः ॥ वा-
राक्योरेकैकिकाथारिगेस्त्रेमृत्यौमन्देगोमदेस्त्रीनातिष्ठेत् ॥ २३ ॥
जन्मलग्नाद्वधूंकुर्याद्दुर्भगांसप्तमेरविः ॥ पापर्क्षेनीचगोहन्यात्पा-
पदृष्टयुतोपिवा ॥ २४ ॥ कृशांगींविकलांकुर्यात्क्षीणश्चेद्विधुर-
स्तगः ॥ पूर्णःशुभैर्युतोदृष्टःकांतकांताशतप्रदः ॥ २५ ॥ द्वितीयाम-
बलांहन्यान्नीचस्थःशत्रुगेहगः ॥ स्वर्क्षेतुंगेशुभैर्दृष्टःकुजोदत्तेशुभां
स्त्रियम् ॥ २६ ॥ वक्रःस्मरस्थोविनिहंतिनारीम्पापर्क्षगामीखलुमं-
दगामी ॥ पुनर्भवावाप्यथवाऽरिरूपाशुभेक्षितस्तुंगसुहृद्भसंस्थः ॥
॥ २७ ॥ यूनेयूनेश्वरेक्रूरयुक्तेजायाविनश्यति ॥ अथोपायम् ॥
विधिवद्भूमिदानंचपत्नीदानंविशेषतः ॥ दासीदानंततोदद्यात्सौख्य-
दंगोप्रदानकम् ॥ २८ ॥ इतिस्त्रीमरणयोगाः ॥ अथद्विग्रह-
योगाः ॥ शुक्रशशिभ्यामस्तेसहितेचेदतनयोविभार्योवा ॥ स्त्री-
पुंभ्यांसंदृष्टेदंपतीपरिणततनूस्ततः ॥ २९ ॥ सुतमित्रोनितऽयाढ्योयू-
नेकेराशिनोभवेत् ॥ स्त्रीवियुक्स्थिरदेहश्चयूनेभौमार्कयोर्नरः ॥ ३० ॥

स्त्रीयुतःसधनोराजद्वेषीजीवार्कयोर्मदे ॥ निर्धनःपृथुदेहोद्रिचारी धयाढ्यःसितार्कयोः ॥ ३१ ॥ प्रेष्योदारिद्र्ययुङ्नीचोभान्वर्क्योः पदबंधुयुक् ॥ असत्यवाक्कुतेर्ष्यालुर्यूनोरंद्रोःप्रलापयुक् ॥ ३२ ॥ नृपोवानृपसन्मान्योविदिंद्वोःसत्कविर्युने ॥ कन्याढ्योनृपतिःप्राज्ञःसवाणिज्योऽब्जजीवयोः ॥ ३३ ॥ कन्यायुक्चाल्पपुत्रस्वः स्त्रीयुग्यूनेसिताब्जयोः ॥ स्त्रीहीनोनगराध्यक्षोयूनेऽब्जार्क्योः पुरेचरः ॥ ३४ ॥ मृताय१स्त्रीर्विवादाढ्यःशूरोयूनेबुधारयोः ॥ शैलांबुवनचारीस्त्रीहीनोजीवारयोर्युने ॥ ३५ ॥ स्त्रीहेत्वनर्थयुग्दुष्टाचारोयूनारशुक्रयोः ॥ स्त्रीदिष्टोविधनोऽन्यस्त्रीरतोयूनार्किभौमयोः ॥ ३६ ॥ स्वाचारःसुकलत्राढ्यःस्वजनाढ्योबुधेज्ययोः ॥ नृपमंत्रीसकल्याणःस्त्रीचेष्टःस्त्रीज्ञशुक्रयोः ॥ ३७ ॥ स्त्रीपुत्रसुखहीनश्चसरुग्धनशनिज्ञयोः ॥ भोगीस्त्रीरत्नसंयुक्तःसकन्योजीवशुक्रयोः ॥ ३८ ॥ मूर्खस्त्रीविरनष्टस्वःपितृस्वःस्त्रीज्यमंदयोः ॥ चित्रस्त्रीरत्नसौख्याढ्यःशुक्रार्क्योःकीर्तियुग्युने ॥ ३९ ॥ इतिमदे ७द्विग्रहयोगाः ॥ अथस्त्रीप्राप्तिस्त्रीसुखयोगानाह ॥ जातकरत्ने॥लग्नार्चंद्राद्वयीर्ध्याढ्यंकलत्रंसप्तमंयदि॥स्वेष्टसौम्येक्षितंदृष्टंस्त्रीप्राप्त्येत्वन्यथानसत्॥ ४० ॥अथदंपत्योःप्रीतियोगाः॥ लग्नेश्वरो लग्नगतःस्मरेशोजायास्थितोद्वावथलग्नसंस्थौ। यामित्रगौद्वावथभर्तृयष्योर्प्रेमातिरेकंकुरुतेविशेषात् ॥ ४१ ॥शत्रुदृष्ट्याचदंपत्योर्नित्यंस्वकटकोभवेत्॥लग्नेशास्तपयोः सत्यमदृष्टयाप्रीतिरल्पता ॥ ४२ ॥ सतींसुशीलांकुलजांविधत्तेनानाविधाश्रीस्फुटरश्मिजालः॥पापः शुभोचस्मरगोस्तनीचः करोतिभार्यांचपलांविशीलाम् ॥ ४३ ॥गौरीं

सुरूपांस्फुटपंकजाक्षींसितःशुभर्क्षेशुभदृष्टयुक्तः॥ चिरायुषंभाग्ययुतं नरंचकुर्य्याद्गुरुर्दर्प्पकदर्प्यवासी ॥ ४४ ॥ जायास्थोभार्गवःकुर्याद्बहुरत्नसुतांबलां ॥ नरंसदासुशीलंचसुंदरंकुलभूषणम् ॥ ४५ ॥ लग्नेशेसप्तमस्थेवाभार्य्यादेशकरः पतिः ॥ लग्नस्थे सप्तमेशेतुभर्तुरादेशकृद्वधूः ॥४६॥ मदगतायदिपापखगास्तदादयितयासहनैवसुखं लभेत्॥ शुभखगा दयितासुखकारकाः शशिमुखीबहुरूपगुणान्विता ॥४७॥ गुरुसितावपिमंदयुतेक्षितौमदगतौचतुरावनितातदा ॥ स्मितमुखीवहुरूपविभूषणावहुसुताधनधान्यसमन्विता ॥४८॥ खलयुतेक्षितमस्तगृहंयदिखलगृहंचखलांतरितस्तथा॥ चपलमत्रकलत्रमथोनरश्चपलदारवशात्परदारयुक्॥४९॥ अथस्वस्त्रीतःपुंसोमृतियोगः॥शनिकुजौमदगौमदनाधिपोनिधनगोपिरिपुव्ययगोथवा॥ मरणमेतितदास्वकलत्रतस्त्वथरविर्विपदावनिताभवेत्॥५०॥ अथ स्त्रीरूपविचारःकल्याणवर्मा॥शुक्रेंदुजीवशशिजैःसकलैस्त्रिभिश्च द्वाभ्यांकलत्रभवनेचतथैककेन॥ एषांगृहेपिचगणेपिविलोकनेवासंतिस्त्रियोभवनवर्गखगस्वभावाः॥५१॥ अन्यच्च॥ शुक्रांशपसमाना स्त्रीवर्णरूपगुणैर्युता ॥ मदपांशपतुल्यंहिस्वभाववरणंतथा ॥५२॥ अथस्त्रीणांसंख्यायोगःहोरासारे ॥ द्युनेशोयत्नमेंशेस्याद्यावंतो वाद्युनेक्षकाः॥ तावंत्यःस्युःस्त्रियोनृणामेकैवार्किकुजांशके॥५३॥ तुलावृषभकर्कपुशुक्रेंदुपतिदृष्टयः ॥ राशिसंख्यासमानाहिस्त्रीणां प्रातिर्निगद्यते ॥५४॥ उदयभास्करात् ॥ मदनगाः ७ विहगाः स्व २ पतीक्षिताः स्वमितितुल्यविवाहकरामताः ॥ इह ७ रवींदुकुजाःप्रबलाःक्रमाद्रस६ दश १० स्व२ मितप्रमदामदाः॥५५॥

अन्यत्॥जायास्थानेयदासौम्याःसौम्यैर्वायदिवीक्षितः॥जायेशो वाथलग्नेशस्तदाजायासतांमता ॥ ५६ ॥ सप्तमेगुरुसौम्यश्चेत्तदे-कावनिताभवेत् ॥ यामित्रेचंद्रशुक्रौचवहुपत्न्यःप्रजायते ॥ ॥ ५७ ॥ यामित्रेचंद्रसितयोर्वर्गःशुक्रेणवीक्षितः ॥ बहुपत्न्योऽ-थवाशुक्रवर्गश्चेद्बहुवल्लभाः ॥ ५८ ॥ जायाधिपोसूर्यभौमोतदेका-वनिताभवेत् ॥ वेश्याप्रियाभवेत्पुंसांबुधांशेसप्तमाधिपे ॥ ५९ ॥ भवनाधिपांशतुल्याभवंतिनार्य्योनिरीक्षणाद्वापि ॥ एकैकरविकु-जांशेगुरुबुधयोश्चापियामित्रे ॥ ६० ॥ अथास्यसवर्णावान्य-वर्णाभार्य्येतिविचारो होराप्रदीपे॥जायेशेगुरुशुक्रांशेसवर्णा-बहुवल्लभा ॥ रविभौमशनेरंशेजायेशेन्यूनजातिका ॥ ६१ ॥ शेषांशेसप्तमाधीशेमध्यजातेश्चकामिनी ॥ ६२ ॥ अथान्यस्त्री-वेश्यादिरतियोगाः जातकसारे ॥ भौमांशकगतेशुक्रेभौमक्षे-त्रगतेथवा ॥ भौमेनयुतदृष्टेवापरस्त्रीभोगमिच्छति ॥ ६३ ॥ अ-न्यन्मनुष्यजातके ॥शुक्रेस्मरेसौरमहीजवर्गेशन्यारदृष्टेऽन्यकल-त्रगामी ॥ तत्रसचंद्रोयदिभूमिजार्कौतदानृनार्य्यौव्याभिचारिणौस्तः ॥६४॥ शनैश्चरेसप्तमगेविलग्नेयदानवांशोधरणीसुतस्य॥ वृद्धांगना सक्तरतोमनुष्यःसदाभवेत्कामनिपीडितात्मा ॥६५॥ यदा विलग्ने सधनुःशशांकेनवांशकःस्याद्रविनंदनस्य ॥ वेश्यानुरक्तंकुरुतेमनुष्यं सदातुरंपापरतंनृशंसम् ॥ ६६ ॥ अथवियोनिरतियोगः॥ सिं-हांशके सूर्यसुतेविलग्नेवासौमदृष्टेरविजेस्तसंस्थे ॥ नरोभवेद्रक्तभ-गोत्रयोगेविपर्य्ययंवकरतानुरक्तः ॥ ६७ ॥ अथकन्यारतियो-गः पवनजातके॥ कन्यांशकेसौम्यदृशाविहीनः विलग्नसंस्थोभृगु

जोऽत्रजातः ॥ कन्यारतिंवांछतिपापयुक्तःस्त्रीलंपटःस्यात्सततंविलज्जः ॥ ६८ ॥ तनुशनिश्चशुचिःस्मरगःसितोविशुभदृक्सुतगंवृपलीपतिः ॥ तरणिबंधुरनंग ७ गतोंबरेविधुरजीवदशावृपलीपतिः ॥६९॥ अथदंपत्योःकाणयोगः उदयभास्करे॥रविविधूव्यय १२ वैरि ६ गतोयदेकनयनौरमणीपुरुषौमतौ ॥ यदिशनिर्मदनेहिमदीधितेःकरतलेनहिवीर्य्यपरिच्युतिः ॥ ७० ॥ अथविधौशनिरारयुतेक्षितेपरखगादिवियोनिगुदावशात् ॥ परवधूरतयोगउपुंदशायदिभवेद्धिगुदारमणस्तदा ॥ ७१ ॥ यदिचदृश्यदलेऽर्कशनीरिपौ ६ हिमगुरस्त ७ गतोविदवीक्षितः॥ कुवृपलीपतिरार्किकुजौयदाऽरिसुखयोस्तरुणीकिलगुर्विणी ॥७२॥ अथरंडयोगान्वृद्धवयसिविवाहयोगानाह॥ यदिसितेंदुसुतौमदनोपगौविलग्नोयदितौशुभवीक्षितौ ॥ वयसिपश्चिमकेरमणीमदौधवसुतादिसुखानिप्रदर्शकौ ॥७३ ॥ अथाऽऽमययोगाः॥ मदग्रहंरविपुत्रयुतेक्षितंभवतिगुल्मगुदामयमेहकृत् ॥ रविकुजावपितद्गृहवर्णवद्गुगदाद्वपुलांछनकारकाः ॥ ७४ ॥ अथविवाहेवर्षज्ञानमुक्तंश्रीगुरुचरणैः॥शुक्राच्चंद्रात्सप्तमंयद्ग्रहंतत्संख्यातुल्यैर्वत्सरकेर्युतैर्वा ॥ स्याद्वुद्वाहोवत्सरेतद्दशांतेवंशोरूपंतत्पतेश्चिन्तनीयम्॥७५॥ अथस्त्रीपुंसयोर्मध्येप्रथमंकस्यमरणंभविष्यतीतिज्ञानमुक्तंतैरेव ॥ नाम्नोर्मात्राकृतगुणाद्द्विगुणाक्षरसंयुताः ॥ तष्टात्रिभिर्द्विशेषे स्त्रीम्रियतेखेकयोःपुमान् ॥ ७६ ॥ अथसप्तमभावेराशिफलम् वृद्धयवनः॥ मेषेस्तसंस्थेचभवेत्कलत्रंक्रूरंनराणांचपलस्वभावम् ॥ पापानुरक्तंकठिनंनृशंसंवित्तप्रियंस्वार्थपरंसदैव ॥७७॥

वृषेस्तसंस्थेचसुरूपदंतंभवेत्कलत्रंप्रणतंप्रशांतम् ॥ पतिव्रतंचारुगुणेनयुक्तंलक्ष्माधिकंब्राह्मणदेवभक्तम् ॥ ७८ ॥ तृतीयराशौचभवेत्कलत्रंकलत्रयुक्तंसधनंसुवृत्तम् ॥ रूपान्वितंसर्वगुणोपपन्नंनवीनवेषंगुरुवर्जितंच ॥ ७९ ॥ कर्कस्तसंस्थेसुमनोहराणिसौभाग्ययुक्तानिगुणान्वितानि ॥ भवंतिसौख्यानिकलत्रकाणिकलंकहीनानिसुसंयतानि ॥ ८० ॥ सिंहेस्तसंस्थेचभवेत्कलत्रंतीक्ष्णस्वभावंचपलंसुदुष्टम् ॥ विहीनवेषंपरवेश्मसंस्थंबह्वाशनंस्वल्पवृतंकृशंच ॥८१॥ कन्यास्तसंस्थेचभवंतिदाराःसुरूपदेहास्तनयैर्विहीनाः ॥ सौभाग्यभोगार्थनयेनयुक्ताःप्रियंवदाःसत्यधनप्रगल्भाः ॥ ८२ ॥ तुलेस्तसंस्थेगुणगर्विताङ्गाभवंतिनार्य्योविविधप्रकाराः॥ पण्यप्रियाधर्मरताःसुदंताः प्रभूतपुत्राःप्रथिताविनीताः ॥ ८३ ॥ कीटेस्तसंस्थेचकलासमेताभवंतिभार्य्याःकृपणानराणाम् ॥ सुकुत्सितांग्यः प्रणयेनहीनादौर्भाग्यदोषैर्विविधैःसमेताः ॥८४॥ चापेस्तसंस्थेचभवेत्कलत्रंसर्वनराणांपुरुषाकृतिंच ॥ सुनिष्ठुरंभक्तिनयेनहीनंप्रशांतिसौख्यंनतिवर्जितंच ॥ ८५ ॥ मृगेस्तसंस्थेचभवेत्कलत्रंनृणांसुदुष्टंविगतस्वभावम् ॥ विस्रस्तलज्जंपरलोकरक्तंयुद्धप्रियंदंभसमन्वितंच ॥ ८६ ॥ घटेस्तसंस्थेचभवेत्कलत्रंस्थिरस्वभावंपतिकर्मदक्षम् ॥ देवद्विजानांसततंप्रहृष्टंधर्मध्वजंसंशयतासमेतम् ॥ ८७ ॥ मीनेस्तसंस्थेचविकारयुक्तंभवेत्कलत्रंकुमतिंकुपुत्रम् ॥ अधर्मशीलंप्रणयेनहीनंमदान्नराणांकलहप्रियंच॥ ८८ ॥ इतिराशिफलम् ॥ अथसप्तमेशभावफलम्॥ दयितेशोलग्नगतः स्तोकंनिःस्नेहमन्यतरभार्यम् ॥ भोगभुजंरूपयुतंसुश्रीकंजनमतिलो-

लचित्तंच ॥ ८९ ॥ जायापतौधनस्थेपुष्टादयितासुतोज्झिताभवति ॥ वित्तंचकलत्रकरंसततंदुःखानुषंगंच ॥ ९० ॥ सप्तमपः सहजगतश्चात्मजवत्सलोदुःखी ॥ देवररतासुरूपागृहिणीक्रूरेतुतद्भ्रूगे ॥ ९१ ॥ जायेशेतुर्य्यस्थेलोलःपितृवैरिसाधकःस्नेही ॥ अस्यपितादुर्वाक्यस्तद्भार्य्यांपालयेचपिता ॥ ९२ ॥ सप्तमपतौसुतस्थेसौभाग्ययुतःसुतान्वितःपुरुषः॥ प्रियसाहसदुष्टमतिस्तत्तनयःपालयेद्दयिताम् ॥ ९३ ॥ रिपुगृहगःकांतेशःप्रियासहवैरिणंसरुग्भार्य्यम् ॥ वनितासंगाक्षपिणंक्रूरः कुरुतेचमृत्युपदम् ॥ ९४ ॥ सप्तमपेसप्तमगेपरमायुःप्रीतवत्सलःपुरुषः ॥ निर्मलशीलसमेतस्तेजस्वीजायतेसततम् ॥ ९५ ॥ रमणीशेनिधनगतेगणिकासुरतपरोगृहेविरतः ॥ विद्वद्द्वितीयासक्तोनस्रीसेवाकरःपुरुषः ॥ ९६ ॥ सुकृतगतेरमणीशेतेजस्वीशिल्पवान्प्रियाप्येवम् ॥ क्रूरेतुखंडरूपालग्नेशोवीक्षितेतपः प्रबलः ॥९७॥ गृहिणीपेदशमस्थेनृपदोपीलंपटःपुमान्क्रूरः॥ क्रूरेदुष्टःश्वशुरःस्यातश्चसर्वतोदिक्षु ॥ ९८॥ लाभस्थेजायेशेभक्तारूपान्वितासुशीलाच॥ दयितापरिणीतास्याद्म्रियतेसाचप्रसवसमये॥९९॥सप्तमपेद्वादशगेगृहवंशूज्झिताभवेद्भार्या॥ लोलासादुष्टाचपुनरुच्चलितस्यपुरुषस्य ॥ १०० ॥ इति सप्तमभावः समाप्तः ॥७॥ अथाष्टमोभावः ॥ नद्युत्तारात्यंतवैषम्यदुर्गं शस्त्रंचापुःसंकटंचेतिसर्वम्॥ रंध्रस्थानेसर्वदाकल्पनीयं प्राचीनानामाज्ञयाजातकज्ञैः॥ १ ॥ नद्युत्तारेचनौकायांमार्गेवैषम्यसंस्थिते॥ दुर्गस्यवेष्टनेचैवफलं तस्माद्विचिंतयेत्॥ २॥ वस्तुनाशहतेवापिशत्रुभिः

कारितेभये ॥ अथवायुद्धसमये तथाव्याधिसमुद्भवे ॥ ३ ॥ छिद्रालोकान्यलीकानिचिंतयेच्चाष्टमेबुधः ॥ अष्टमेभवनेक्रूरेरोगार्तोम्रियतेध्रुवम् ॥ ४ ॥ बंधनान्मुच्यतेबद्धोनरोनात्रविचारणा ॥ नौकायांचाष्टमेक्रूरेसुखेनायातिपूरिता ॥ ५ ॥ द्वितीयेचाष्टमेक्रूरे युद्धतः कलहश्चिरम् ॥ अष्टमेसंस्थितेक्रूरेदुर्गभंगोनजायते ॥ लक्षयेचविशेषेणदेवेंद्रेपिसमागते ॥ ६ ॥ अथसामान्यविचारेणाऽष्टमस्थरव्यादीनांफलानिगर्गमतेन ॥ तुंगर्क्षेह्यष्टमः सूर्य्यः सुखमृत्युंप्रयच्छति ॥ अन्यत्रदुःखमरणंदत्तेकाष्ठाचयातनाम् ॥ ७ ॥ विक्रमस्थेनपापेन क्रूरेणमृत्युगोरविः ॥ युक्तोदृष्टः स्थूलभूरियमदूतो विनाशयेत् ॥ ८ ॥ अथचंद्रफलम् ॥ चंद्रोष्टमेमृत्युकरोनराणां क्षीणोमृतिंयच्छतिबाल्यएव ॥ कालेत्रिदोषज्वरदाहदातानयत्यधः क्षीणतनुर्धरित्र्याम् ॥ ९ ॥ मृत्युंगतोमृत्युकरोमहीजः शस्त्रादिलूतादिगिरिश्चितोवा ॥ कुष्ठप्रणाशोगृहिणीप्रपीडानयत्यधोनाशकमानयेच ॥ १० ॥ करोतिमृत्युंनिधनस्थितोबुधः सुखेनतीर्थेसुरदे निराविले ॥ शूलस्यजंघोदररोगपीडा पापोपिधायांतकरोनराणाम् ॥ ११ ॥ जीवेमृत्युगतेज्ञानात्सुतीर्थेमरणंभवेत् ॥ शुभर्क्षस्यगृहेचेत्स्यादन्यत्रमरणंश्रमात् ॥ १२ ॥ आनृण्यंपितुराधत्तेतीर्थे मरणमेवच ॥ नयेत्पितृकुलंपुण्यंरंध्रगोभृगुनंदनः ॥ १३ ॥ विदेशतोनीचसमीपतोवासौरिर्मृतिंरंध्रगतोविधत्ते ॥ हृच्छोककासामयवह्निपूचीनानाविधरोगगणंविधाय ॥ १४ ॥ राहुफलम् ॥ दंष्ट्रचौर्य्यापवादेनकुरुतेनिधनंतमः ॥ बहुकिल्बिषमाधत्ते धनेकष्टासयातनाम् ॥ १५ ॥ इति ॥ अथाष्टमस्थरव्यादीनांविशेषफ-

ळम्।वीर्य्यान्वितःपश्यतिमृत्युभंयस्तद्धातुकोपान्मृतिमामनंति ॥त-
द्युक्तकालाख्यनरस्यगात्रंतस्मिन्प्रदेशेवह्वभिर्बहूनाम् ।१६। सूर्य्या-
दिभिर्निधनगैर्निधनंहुताशतोयायुधज्वरजमामयजंक्रमेण ॥क्षुत्तृट्कृ-
तंचचरभेपरदेशगस्यस्याच्चस्थितेस्वविषयेपथिचाद्विमूर्तौ ॥१७॥
वह्न्यंब्वायुधतोज्वरामयतृषाक्षुत्तोर्कमुख्यैर्मृती रंध्रस्थैःसबलेक्षका-
च्चनिधनंवारंध्रपत्र्यंशपात् ॥ पित्ताद्वातकफाच्चापित्तत्रइहत्रिभ्यः क-
फाच्चानिलश्लेष्मभ्यांमरुतोर्कतःसमयतुच्छिद्रांगकेकोपतः ॥१८॥
छिद्रेशेस्वभगेचतीर्थमरणंलग्नेशयुक्तेतथाजीवाढ्येचसितान्वितेथच
रभेछिद्रेन्यदेशेविपत् ॥ षष्ठाष्टस्थबुधारयोर्यदितदाचौरोस्यपा-
दौकरौनश्येतांख १० सुखस्थसूर्य्यकुजयोःशैलाग्रपाताद्वधः ॥
॥१९॥ अथाल्पायुर्योगाः ॥ गुरुसितेंदुसुतानिधनेथवास्थिरग-
गाःसततंबहुकष्टदाः ॥ भवतिशैशवदुष्टकृदष्टपोयदिशुभोभवगोविर-
तौसुखी ॥२०॥ यदिखलोलघुजीवनकृत्तथाशुभयुतोबहुजीवनदः
स्मृतः॥निधनपः खलुयुग्मयुतो व्ययारिभगतोयदिवानिधनेश्वरः ॥
॥ २१ ॥ सतनुपोद्रुतमृत्युकरोभवेदथषडष्टगतोमृतिदेहपौ ॥
गतबलौहिरणेपरमार्तिदौमबलिनौविजयायपरंमतौ ॥२२॥ अथ-
यवनजातकेमृत्युयोगाः॥तनौरविःसुतेभौमोव्ह्यष्टमस्थःशनैश्वरः॥
नवमेचंद्रमायस्यलोभान्मृत्युर्नसंशयः ॥ २३ ॥ दशमेंगारको
जीवः सूर्योयदिचसप्तगः ॥ योगेस्मिञ्जायतेमृत्युस्तुरगान्मानव-
स्यच ॥ २४ ॥ तनौशनौरिपौसूर्यश्चास्तेज्ञोदशमेशशी ॥ नवमे
भूसुतोनूनंमृत्युर्वृषभेणवाग्निना ॥२५॥ षष्ठेवादशमेभौमोधनेचंद्रोऽ-
ष्टमेथवा ॥ भगंदरेणकुष्ठेनमृत्युरेवनसंशयः ॥ २६ ॥ तनौरविसु-

गोभौमः सूर्य्यःसप्तमगोभवेत् ॥ योगेस्मिञ्जायतेमृत्युःखड्गेनैवतु निश्चितम् ॥ २७ ॥ रविरंगारकौचैवचतुर्थभवनेगतौ ॥ दशमेरविसूनुश्चगजान्मृत्युर्नसंशयः ॥ २८ ॥ यदिक्रूरग्रहाक्रां तौस्थानावष्टमपंचमौ ॥ तस्यबंधुवशान्मृत्युर्निर्दिष्टोमुनिपुंगवैः ॥ २९ ॥ हिबुकेभास्करोयस्यद्वितीयस्थोनिशाकरः ॥ शूलिकायांभवेत्तस्यमृत्युरेवनसंशयः ॥ ३० ॥ यस्यजन्मनिजायस्थाश्चंद्रभौमशनैश्चराः ॥ जायतेपरदारार्थंविनाशस्तस्य निश्चितम् ॥३१॥ धर्मस्थानेगतेचंद्रेकर्कमध्येधनेशनौ ॥ जलोदरेणरोगेणमृत्युरेवनसंशयः ॥३२॥ मूर्तौगतौतुमंदार्कौभौमचंद्रौतुसप्तमे ॥ द्वितीयेयदिशुक्रस्तुमृत्युःस्त्रीकारणेनतु ॥ ३३ ॥ षष्ठेक्रूर ग्रहोयस्यनवमेचाष्टमेयदा ॥ शत्रुमध्येनसंदेहोमृत्युरेवनसंशयः ॥ ॥ ३४ ॥ पातालगोयदाक्रूरोदशमस्थस्तपोधनः ॥ तदातलमहारेणमृत्युस्तस्यप्रजायते ॥ ३५ ॥ सुहृत्संस्थोयदाभौमोदशमस्थःप्रजायते ॥ वायुशूलाद्भवेन्मृत्युर्जातकस्यनसंशयः ॥ ३६ ॥ चतुर्थगःशनिर्यस्यदशमस्थोधरात्मजः ॥ अपमृत्युर्भवेत्तस्यनात्रकार्या विचारणा ॥ ३७ ॥ नवमेरजनीनाथोकर्कसंस्थोधनेधनी ॥ जलोदरेणरोगेणमृत्युःस्यात्तस्यनिश्चितम् ॥ ३८ ॥ अन्येयोगाः॥ सूर्यर्क्षेरविजेकुजर्क्षगगुरौनोपाययुक्तोभुजच्छेदोथोरिगृहेशनिः सितयुतोविरीक्षितौघ्येकहृत् ॥ ३९ ॥ कर्केगोहरिगेब्जउद्धतशिराश्छिद्रेंद्विनार्कतकः सदम्यीनविधौचशत्रुगृहगेपापत्रयाद्येक्षिहृत् ॥ ४० ॥ अथग्रहभगोभयोगो ॥ सूर्य्यारेक्षितपापराशिगविधौस्याद्ग-

क्षघातीपुनर्मंदाढ्येखलुगोवधीत्रितयके १ । २ । ३ ऽजा-
त्स्थूलघातःखगैः ॥ सौम्येशत्रुगृहेरवीक्षितयुतेषष्ठाष्टमेंदौकजैर्ना-
शःशत्रुगृहेकुजारिगृहगेछिद्रेद्विजिह्वान्मृतिः ॥ ४१ ॥ सिंहेकर्किं-
णिसप्तमाष्टगविधौसाऽगौविलस्थेत्पशोः सागोस्वारिगृहेशनौरिपुदृशा
युक्तेतिपापीस्मृतः ॥ कर्केंदौसशनौशुभग्रहदृश्याहीनेतुखंजोभवेत्
भानौधर्मगतेशशीक्षितयुतेशत्रोर्गृहेसर्पतः ॥ ४२ ॥ अन्यंत्सा-
रावल्याम् ॥ कन्यास्ययोरिनेंद्वोःपापेक्षितयोर्मृतिःस्वजनात् ॥
उभयोरप्यर्कशशिनोर्मंदातदातोयमज्जनतः ॥ ४३ ॥ मृत्युर्जला-
द्विशेन्मंदेकुलीरेमकरेविधौ ॥ सवह्निशास्त्रजश्चंद्रेकुजर्क्षेपापमध्यगे॥
॥ ४४ ॥ कन्यायांपापमध्यस्थेचंद्रेरक्तोत्थशोफजः ॥ शस्त्राग्नि-
पाततोमृत्युः पापांशेसौरभेविधौ ॥ ४५ ॥ सौम्याऽदृष्टौखलौधर्म-
धीस्थौबंधान्मृतिभदो ॥ वधस्त्र्यंशेशपाशाविर्हिमगुश्छिद्रगस्तथा ॥
॥ ४६ ॥ सपापेशीतगौयूनेमीनराश्युद्गमेरवौ ॥ मेषेशुक्रेंगनाहेतु-
र्मरणंमंदिरेभवेत् ॥ ४७ ॥ शूलोद्भिन्नमृतिर्भौमेसुखेर्केवायमेंबरे॥
त्रिकोणायगतैःपापैर्युगपत्सकृशेंदुभिः ॥ ४८ ॥ रुधिरेसुखेथवा-
र्केविपयमेक्षीणचंद्रसंयुक्ते ॥ पापैस्त्रिकोणलग्नेशूलप्रोतस्यानिर्दिशे-
न्मरणम् ॥ ४९ ॥ चतुर्थेवांबरेशौमेक्षीणचंद्रसमन्विते ॥ मंददृष्टे
मृतिंयातिदंडकष्टेनताडितः ॥ ५० ॥ क्षीणेंदुमंदार्किकुजेश्वरंध्र-
लग्नांबुखस्थे ८ । १ । ४ । १० लेकुडाहतांगः ॥ तैःकर्मल-
ग्नात्मजधर्मसंस्थैर्धूमाग्निमृत्युर्गतिकुंठितांगैः ॥ ५१ ॥ सुखास्त-
खस्थैःकुजसूर्यमंदैर्मृत्युस्तुशास्त्रानलभूपकोपात् ॥ तथाक्षतोत्थ-

कुमिजांगपाक्षोमंदेन्दुभौमेधनबंधुखस्थैः २ । ४ । १० । ॥ ५२ ॥ सूर्य्येंबरेसुखेभौमेमृत्युर्यानप्रपाततः ॥ यंत्रोत्पीडनंया घूनेभौमेखेज्ञेरतबंधुगे ॥ ५३ ॥ बलान्वितारवीक्षितेकुशेविधौमृतेशनौ ॥ कुमिक्षताद्रुदामयान्मृतिश्चशस्त्रदाहजा ॥ ५४ ॥ सभौमेभास्करेयूनेरंध्रसंस्थेशनैश्वरे ॥ पातालेशीतगौक्षीणेमृत्युः पंक्षीकृतोभवेत् ॥ ५५ ॥ लग्नधीमृत्युधर्मेपु सूर्यमंदकुजेंदुभिः ॥ मृत्युर्भवतिशैलांगकुड्याऽशनिनिपाततः ॥ ५६ ॥ अत्रयस्योक्तयोगानांवक्ष्यमाणयोगानांमध्येचान्यतमोनभवतिनचाष्टमंस्थानंग्रहैर्युतवीक्षितंभवतितदातस्यद्वाविंशतिद्रेष्काणाधिपाष्टमराश्यधिपयोर्बलवान् तदुक्तदोषेणवातपित्तकफादिनाप्रागुक्तहुताशतोवायुधादिनामृत्युर्वाच्यः ॥ ५७ ॥ अथद्रेष्काणफलंहोराप्रदीपात् ॥ उक्तंच॥ द्रेष्काणः कारणंमृत्योर्द्वाविंशेहिविलग्नतः ॥ तस्येश्वरेभ८ नाथोवासूचयेत्स्वगुणैर्मृतिम् ॥५८॥ बादरायण ः॥ मेषाद्रेष्काणेक्रूरवीक्षितेनशुभदृष्टे ॥ वृश्चिककर्कटसर्पैर्द्विपदाद्यैः पित्तरोगैर्वा ॥ ५९ ॥ अद्भिर्नकायैर्वामृत्युर्जलजैर्द्वितीयद्रेष्काणे ॥ एवंतृतीयभागेतडागवापीप्रपानाद्वा ॥ ६० ॥ वृषभाद्येद्रेष्काणेतुरगखरोष्ट्रैर्मृतिर्भवतिपुंसाम् ॥ वापित्ताग्निचौर्य्योदजाविनोर्वाद्वितीयोत्र वा॥६१॥ यानादिकपातात्संग्रामेवामृतिर्वृषस्यांते ॥ मिथुनाद्येद्रेष्काणेखलरोगैःश्वासकासैर्वा ॥ ६२ ॥ महिषवृषयोर्मिथुनद्विपद्रेष्काणकेनिपाताद्वा ॥ तृतीयेननिपाताच्चतुष्पदाद्वामृतिररण्ये ॥ ६३ ॥ कर्कटकाद्येमृत्युः कंटरुजामांयतोथवाऽस्त्रवशात् ॥ तत्रैवमध्यभागे दंडाभिहतस्यमुष्टिघाताद्वा ॥६४॥ तत्रै-

वांत्येभागेमृत्युरतीसारतस्तथाऽजीर्णात् ॥ प्लीहवातगुल्मरोगैः प्रमेहमूर्च्छाभिघाताद्वा ॥६७॥ सिंहाद्येद्रेष्काणेविपदोषाद्वहुचराज्वलाद्वापि ॥ भवतिहिमरणनिमित्तैर्नानाकारैस्तथारोगैः ॥६८॥ जलजह्रदयामयकृतोमृत्युः स्यात्सिहमध्यमेह्यंशे ॥ तस्यांतेगुदरोगैर्विषेणशस्त्रेणवाभवति ॥ ६९ ॥ कन्याद्येचौरानलपक्षिभिरंतोथवाशिरोरोगात् ॥ दुर्गाहिदंष्ट्रितुरगैस्तृषयापिमृतिर्द्वितीयांशे ॥७०॥ करभखरस्रस्ततोयादपिशापात्स्त्रीकृतान्नपानाद्वा॥अंत्येकन्याअंशेनृणांहिमृत्युः समादिष्टः ॥७१॥आद्यतुलाधरअंशेगनाचतुष्पदनिपातजोमृत्युः ॥ मध्येतुजठररोगैरंत्येप्यालाबुपातेभ्यः ॥ ॥ ७२ ॥ अलिनः प्रथमेअंशेशस्त्रविषस्त्रीकृतान्नपानैः स्यात् ॥ मध्येश्वादिभिरेणेभोष्ट्रादिघाततोंत्येभृतिर्भवति ॥ ७३ ॥ चापाद्येशकृदनिलाद्विपानलान्मध्यमेभ्यंशे ॥ भवतिहिजठरामयजैस्तृतीयेजलजेनवामृत्युः ॥ ७४ ॥ हरिशूकरादिराजभिरंतोमकरादिद्रेष्काणेस्यात् ॥ मध्येजलजैः कशया अंतेशस्त्राग्निचौरघातेन ॥ ७५ ॥ कुंभाद्येजलजस्त्रीविषमांतर्मदनगुरुरुजामध्ये ॥ अंत्येमृत्युश्चतुष्पदमुखरोगैर्भवतिद्रेष्काणे ॥ ७६ ॥ मीनाद्येस्त्रीग्रहणात्प्रमेहगुल्मैरथद्वितीयांशे ॥कर्पूराज्वलरोगादथविमूत्रोद्भवोत्येंशे ॥ ७७ ॥ जातकोत्तमेकाश्यपकृते ॥ स्वोच्चेस्वोचनवांशेवाशुभवर्गेथनीचगे ॥ नीचांशेक्रूरपड्वर्गेमित्रभेसुहृदंशके ॥ ७८ ॥ वर्गोत्तमेऽरिजेप्यंशेस्वर्क्षेद्वादशधाक्रमात् ॥ फलमष्टमभावोत्थंकथ्यतेयवनोदितम् ॥७९॥ अथरविफलम् ॥ भक्तिजाग्निप्रवेशेन १ जनहीनः २ प्रमादतः ३ दावाग्नितो ४

दंभकृतो ५ दीपनेन ६ विपादनात् ७ ॥ ७८ ॥ बंधना ८ च्चैवलोहाच९रक्तकोपात्तथैवच॥१०॥क्षयकासा११दातपाच१२ मृत्युर्मृत्युगतेरवौ ॥ ७९॥ चंद्रफलम् ॥ जलप्रवेशा १ द्धस्ता-भिघाता २ दसिनिपाततः ३ ॥ स्त्रीहस्ता ४ त्पित्तकफतो ५ दोषत्रयभवामयात् ६ ॥८० ॥ जठरा७च्छुदरोगाच ८ पशुपादा-भिघाततः९ ॥ गुदरोगात्१० शृंगघातात् ११ क्षया १२ चंद्रेऽष्टमेमृतिः॥८१॥ भौमफलम्॥ संग्रामा १ द्रोग्रहणतः २ स्वहस्ता ३ न्निजशत्रुतः ४॥ द्विजपार्श्वा ५ दश्मपातात् ६ काष्ठा ७ त्कूपप्रपाततः ८॥ भित्तिपाता ९ द्गुल्मरोगा १०द्विषभक्षणत ११ स्ततः॥चौरप्रहरणा १२ द्भौमेमृत्युः स्यान्मृत्युभावगे ॥ ८२ ॥ बुधफलम्॥ज्वरात्१ कफविकारोत्थं२वातरोगा ३ द्व्रणेनच ४॥ महामयात् ५ प्रियजनवियोगा ६ द्वंदनामयात् ७ ॥ ८३ ॥ नेत्ररोगा ८ द्वायुरोगा९द्वंधनेनो १० दरामयात् ११॥ ८४ ॥ पादव्रणा १२ द्बुधेमृत्युर्मृत्युंभावगतेक्रमात् ॥ गुरुफलम् ॥ नानारोगैः १ शूलरोगैः २ कर्णरोगात्तथैवच ३ ॥ स्वजना ४ द्विपूचिकातोऽ५ तीसारा ६ न्निजमृत्युतः ७ ॥८५॥ रक्तकोपा ८ त्तुरगतो ९ निर्जेशा १० द्राजकोपतः ११ ॥ बहुभक्षणा १२ द्भवेन्मृत्युर्जीवेस्यान्मृत्युभावगे ॥ ८६ ॥ भृगुफलम् ॥ तृष्णया १ मुखरोगाच२दंतदोषा३ त्रिदोषतः४ ॥ विपूच्या५वनसत्वेन ६ भुजंगा ७ विषभक्षणात् ८ ॥ ८७ ॥ लूतया ९ विषकंठेन १० सुरलोत्थ ११ प्रकोपतः १२ ॥ बहुदुःखाद्भवेन्मृत्युर्मृत्युभावगतेसिते ॥ ८८ ॥ शनिफलम् ॥

बुभुक्षया १ लंघनेन२तथामायोपवेशनात् ३॥ बंधुवर्गा ४ दरि-
करात् ५ क्षयतः ६ पृथुदद्रुतः ७ ॥ ८९ ॥ चटके ८ व्रणकोः
पेन९हयपादाभिघाततः १०॥ हास्तितः ११ खरतो१२ मृत्युर्मंदे
स्यान्मृत्युभावगे ॥ ९० ॥ होरासारेपि ॥ अजातानांहिजंतूनां
मरणंयेनकेनचित्॥निमित्तपरतोज्ञानंवक्ष्येनिर्याणलक्षणम्॥९१॥
लग्नादष्टमराशेःस्वभावदोपोद्भवंविजानीयात् ॥ निधनेशस्यनवांश-
स्थितराशिनिमित्तदोपजनितंवा ॥९२॥मेपांशेमेपेवाज्वरविपजठ-
राग्निपित्तसंभवतः ॥ येनग्रहेणयुक्तेदृष्टेवातस्यधातुदोपेण॥ ९३ ॥
वृपभेवृपभांशेवात्रिदोपशोकपरावदाहाद्यैः॥ग्रहरहितेप्रोक्तफलंग्रह-
युक्तेतत्समानदोपेण ॥ ९४ ॥ मिथुनेमिथुनांशेवाश्वासःकासोद्भ-
वश्वशूलाद्यः ॥ कर्केकर्कांशेवातन्मायादरोचनाद्वापि ॥ ९५ ॥
सिंहेसिंहांशेवाविस्फोटकशस्त्रज्वराद्यैश्च ॥ कन्यायांकन्यांशेजठ-
राग्निगुह्यकलहपातनाद्यैश्च ॥ ९६ ॥ यूकेतदंशकेवास्वबुद्धिदोपे-
णहन्यतेपुरुपः ॥ ज्वरसान्निपातदोपैर्मरणंब्रूयादशंकितोनूनम् ॥
॥९७॥ वृश्चिकराशौचांशेपांडुग्रहणीग्रहादिदोपेण ॥ वृक्षजलश-
स्त्रकाष्ठैश्चापांशकेचापयुतेमृत्युः॥९८॥मकरेमकरांशेवास्थूलान्ना-
ऽरुचिबुद्धिसंभ्रमान्मृत्युः॥पापयुतेव्याघ्राद्यैःसर्पाद्यैर्दानसंदेहः९९॥
कुंभेकुंभांशेवाव्याघ्रैः शस्त्रभुजंगमाद्यैर्वा ॥ श्वासज्वरक्षयकृते-
र्मरणंब्रूयाद्विशेपेण ॥१००॥ मीनेमीनांशेवासर्पेणहतोऽध्वगस्त-
त्र ॥ अब्जैर्वाजलमध्येजलचरकोपेनपीडितोमृत्युः ॥ १ ॥
पूर्वोक्तमृत्युभागेशशिनिवित्प्रेव्ययेथवानिधने ॥ जलयंत्रकारणे
वानिधनंनृणांसमुद्दिष्टम् ॥ २ ॥ अर्केदुलग्नगतौद्विदेहलग्नेपुपाप-

युग्दृष्टौ ॥ कुरुतः प्राणवियोगंजलमध्येनिश्चितंब्रूयात् ॥ ३ ॥ भौमार्कजभवनेऽजेपापद्वयमध्यगेनसौम्ययुते ॥ कन्यायांहिमगौवा ज्वराग्निसन्निपातदोषेण ॥ ४ ॥ सौरेहिमगौव्यंयगेरिपुरंध्रगतेसुखेवापि ॥ नियतंवारिनिधौस्यान्निधनेशेपापमध्यरंध्रगते ॥ ५॥ चंद्रात्त्रिकोणसंस्थेपापैर्लग्नात्त्रिकोणसंस्थैर्वा ॥ उद्वेजबंधनाद्यैर्निधनंभौमेनसंयुक्ते ॥ ६ ॥ राहुध्वजान्वितेर्केयामित्रेरंध्रसंस्थिते शुक्रे ॥ पापग्रहोदयगश्चेदुद्बंधनेनहन्यतेपुरुषः ॥ ७ ॥ पापद्वयमध्यगतेहोरेशेकेंद्रसंस्थितेयस्य ॥ यःकश्चिन्निधनगतोनिधनंस्यादात्मकोपजनितंवा ॥ ८ ॥ अर्कोदयेर्कपुत्रे सुतरंध्रकुजेविधौभाग्ये ॥ वृक्षाऽशनिकूटपातैर्योगेजनितस्यनिर्दिशेन्मरणम् ॥ ९ ॥ क्षीणेंदौनिधनस्थेसुखगेचशनौचयामित्रे ॥ भौमे कुटुंबसंस्थेयोगेजातस्यकाष्ठपातेन ॥ १० ॥ क्षीणेंदौदशमं यातेकुजर्क्षेभास्करेस्थिते ॥ चंद्रेमन्दगृहंयातेविण्मध्येमरणंभवेत् ॥ ११ ॥ भौमेसुखेस्तगेवामंदेदशमे १० ष्टमे ग्रहःकश्चित् ॥ क्षितिपालकोपजनितंनिधनंब्रूयात्स्वशस्त्रदोषाद्वा॥ ॥ १२ ॥ सुखदशमस्थैःपापैःक्षीणेंदौरंध्र८पष्ठ६रिःफे १२ वा ॥ मृत्युर्यात्राकालेप्रपतनाच्छस्त्रदोषाद्वा ॥ १३ ॥ अर्ककुजौव्ययसंस्थौराहुःशशीसप्तमेगुरुःकेंद्रे ॥ जातस्यहिमृतिर्विंद्यात्प्रशस्तभूमौसुरालयोयाने ॥ १४ ॥ रंध्रेशेजलभवनेजलसंस्थेशत्रुरिःफभवनेवा ॥ व्यालमृगोरगहेतोर्मृत्युःकूपेथवागृहेभवति ॥ १५ ॥ शिखिसहितेष्टमराशौनिधनेशेकेंद्रगेव्ययेपापे ॥ लग्नेशेहीनबलेमरणंदुर्मार्गेरोगजनितंवा ॥ १६ ॥ विषघटिकायांजातोनिधनंक्रूरे-

र्विपाग्निशस्त्रैर्वा॥ निधनेश्वरेत्रिपंशेक्रूरयुतेतन्निमित्तदोषेण॥१७॥ भौमार्कजौयदिपरस्परभागसंस्थौक्षेत्रेथवानिधनमेशयुतेचकेंद्रे ॥ तस्यावसानसमये क्षितिपालकोपाच्छूलादिनायुधशतैर्निधनंसमेति ॥ १८ ॥ लग्नेशशीदिनकरेविबलेष्टमस्थेलग्नाद्व्ययेसुखगतेपिच पापखेटे ॥ जातःस्वहस्तनयनच्युतदेहमृत्युःशस्त्रेणवाविषविपादकृतेनवास्यात् ॥१९॥ लग्नसुतरंध्रभावयोगंस्याधत्रतत्रराशौहि ॥ सार्द्धसुतेनमरणंतथैवदारेणसंयुतेतद्वत् ॥ २० ॥ अनुदितनवांशकालेमोहोद्विगुणः शुभग्रहोलग्ने ॥ क्षेत्रोच्चांशकयुक्तेत्रिगुणेनिधने चपापसंयुक्ते ॥ २१ ॥ लग्नेशेजलभांशेजलराशौचंद्रशुक्रयोर्दृष्टे॥ व्ययनिधनेवापापेशवदहननास्यजातस्य ॥ २२ ॥ जीवक्षेत्रोदये लग्नेसुरलोकंगमिष्यति ॥ सूर्यभौमोदयक्षेत्रेतिर्य्यग्योनिपुसंविशेत् ॥ २३ ॥ मंदराश्युदयेक्षेत्रेक्षीणलोकंगमिष्यति ॥ २४ ॥ अथ मोक्षयोगः ॥अष्टमाधिपतिरेवंपुण्यगोजीवशुक्रबुधचंद्रवीक्षितः ॥ द्वारिकांप्रतिमूर्तिंकरोत्यसौतस्यशुद्धमतिसंयुतस्यच ॥ २५ ॥ नैधनेशोयदासौम्यग्रहोभवतियस्यतुः ॥ सौम्यैर्दृष्टंचनिधनंतदातीर्थेसमादिशेत् ॥ २६ ॥ जीवेभयागमरणंविधुनाचकाश्यांद्वारावतींबुधसितौयदिधर्मभावे ॥ द्रेष्काणपेष्यथकुजेपरदेशमृत्युंजीवेस्वभूमिमरणंप्रवदंतिसंतः ॥ २७ ॥ धर्मस्थितःकुजोमृत्युंमार्गेकुर्य्याच्चचंद्रजः ॥ शिवालयेमूर्तिदत्तेतीर्थेधर्मेश्वरेतथा ॥२८॥ चंद्रोयदानवमभावपतिर्मूर्तिस्थः सन्मृत्युरेवहरितीर्थसमाश्रमेस्यात् ॥एवं भृगुर्भवतिमुक्तिपुरीस्थितस्यजीवेस्यगेहमरणंविधिनाशुभेन ॥ २९॥ पुण्यभावपतिरेवमृत्युगोयस्यजन्मनिभवेच्छुभग्रहः ॥ सौम्यसे

टसहितः खलुदृष्टस्तस्यमृत्युरुदितः खलुकाश्याम् ॥ ३० ॥
त्रयोग्रहायदैकत्रजन्मराशिविवर्जिताः ॥ हित्वापापसहस्राणिम्रि-
यतेजाह्नवीजले ॥ ३१॥ धर्माधिपः पश्यतिधर्मभावंलग्नाधिपःपं
श्यतिचेद्विलग्नम् ॥ मृत्युंयदापश्यतिमृत्युनाथस्तदासुतीर्थेनियतं
चमृत्युः ॥ ३२ ॥ मृतिपतिः खलुकंटकगोयदा भवतिजन्मनि
यस्यशुभग्रहः ॥ सचसुतीर्थगतिंलभतेपुमान्भवतिमुक्तिरियंहरि-
नामतः ॥ ३३ ॥ खलखेटोजन्मकालेयूनगोनिधनेश्वरः ॥ यदा
तदाभवेन्मार्गेमृत्युस्तस्यनसंशयः ॥ ३४ ॥ मृतिपतिस्तुखलोयदि
लग्नगस्तनुपतिश्वविलोकयतेयदा ॥ मृतिकरः सहसास्वगृहेभवेन्नि-
जजनैरहितः खलुदृष्टदः ॥ ३५ ॥ शनिःकर्कटकेतिष्ठेन्मकरेभू-
मिनंदनः ॥ सचौरत्वमिहप्राप्यच्छेदंप्राप्नोतिवैकरे ॥ ३६ ॥ कुंभे
धनुषिमीनेवामिथुनेचैवनित्यशः ॥ यदिपापग्रहाः सर्वेवज्रपातेनन-
श्यति ॥ ३७ ॥ मृत्युंकरोतिदूरंचमृत्युस्थानंगतोऽब्जजः ॥ वृथा-
शत्रुर्महाभीवो मरणंकिल्बिषान्वितम् ॥ ३८ ॥ मृत्युभावशुभै-
र्दृष्टियुतेवास्वामिसंयुते ॥सुतीर्थेस्वजनाक्रान्तेस्थिरांशेमृत्युमाप्नुया-
त् ॥ ३९ ॥ **अथमरणभूमिज्ञानं वराहमतेन** ॥ होरा-
नवांशकपयुक्तसमानभूमौयोगेक्षणादिभिरतः परिकल्प्यमेतत् ॥ मो-
हस्तुमृत्युसमयेऽनुदितांशतुल्यःस्वेशेक्षितेद्विगुणतस्त्रिगुणः शुभैश्च ॥
॥ ४० ॥ **अयमर्थः** ॥ जन्मलग्नेयस्यनवांशस्तद्भूमौमृत्युः। यथा
मेषेअजभूमौवृषेबलीवर्दभूमौइत्यादि ॥ अथवा होरानवांशकपेन
साकंयोग्रहोयुनक्तिवातंपश्यति तस्यग्रहयोनिभेदाध्यायेयाभूमि-
रुक्तातस्यांभूमौवामृत्युर्भवति ॥ यत्रचबहुभूमिसंभवस्तत्रबलाधि-

कस्यभूमिर्वाच्या ॥ ४१ ॥ अथमोहज्ञानम् ॥ लग्नेयावंतोभागा अनुदिताऽवशिष्टास्तेषांयावत्कालस्तावत्कालपर्य्यंतंमोहः ॥ लग्नं यदास्वामिनादृष्टंतदाद्विगुणश्चशुभैरपिदृष्टंतदात्रिगुणः अर्थादेवाशुभ सौम्यदृष्टेषड्गुणः ॥ ४२ ॥ अथशवपरिमाणज्ञानंवराहमतेन ॥ दहनजलविमिश्रैर्भस्मसंक्लेदशोषैर्निधनभवनसंस्थैर्व्यालवर्गैर्विडन्तः । इतिशवपरिणामश्चिंतनीयंयथोक्तं पृथुविरचितशास्त्राद्गत्यनूकादि चिंत्यम् ॥ ४३ ॥ अयमर्थः ॥ मृत्युर्भवनेयदिदहनद्रेष्काणः पापग्रहद्रे ष्काणः पापग्रहयुक्तस्तदाशवस्याग्निसंस्कारोभवति । यदाजलद्रेष्का णःसौम्यद्रेष्काणस्तदाजलप्रक्षेपोभवति ॥ यदाचमिश्रद्रेष्काणःपाप युक्तसौम्यद्रेष्काणः सौम्ययुक्तपापद्रेष्काणोवाष्टमेभवति तदाशवस्य नसंस्कारोनवाजलसंस्कारःकिंतुक्रमेणशुष्यति ॥ यदाष्टमसूर्पद्रेष्का णस्तदांतोविष्ठारूपपरिणामः स्वशृगालादिभिर्भक्ष्यतेइत्यर्थः । क र्कस्यप्रथमद्वितीयौ वृश्चिकस्यप्रथमद्वितीयौमीनांत्यश्चेत्येवंपंचसर्प द्रेष्काणाः ॥ ४४ ॥ अथगत्यनूकादिज्ञानंवराहः ॥ गुरुरुडुपतिशु क्रौसूर्यभौमौयमज्ञौविबुधपितृतिरश्चोनारकीयांश्चकुर्युः ॥ दिनकर शशिवीर्य्याधिष्ठितत्र्यंशनाथाःप्रवरसमनिकृष्टास्तुंगहृत्स्यादनेके ४५ गतिरथरिपुरंध्रत्र्यंशयोस्तत्स्थितोवागुरुरथरिपुरंध्रच्छिद्रगः स्वो च्चसंस्थः ॥ उदयतिभवनेंत्येसौम्यभागेचमोक्षोभवतियदिवलेनभो ज्झितास्तत्रशेषाः ॥ ४६ ॥ अयमर्थः ॥ जन्मनिसूर्य्यचंद्रयोर्म ध्येयोवली सयस्मिन्द्रेष्काणेभवतितदीशस्ययोलोकस्तस्माल्लोका दागतइतिवक्तव्यम् ॥ तद्यथा ॥ द्रेष्काणेशोयदिगुरुस्तदादेव लोकादागतः ॥ यदिचन्द्रशुक्रयोरन्यतरस्तदापितृलोकादागतः ॥

रविभौमयोरन्यतरस्तदातिर्यग्लोकादागतः ॥ यदिशनिबुधयोरन्यतरस्तदानरकादागतः॥इतिवक्तव्यम् ॥ सचेद्रेष्काणोयदिउच्चेतत्रात्युत्तमलोकादागतःनीचस्तदाऽधमलोकात्।अंतरेणसमाल्लोकादागतःएतदनूकेप्राग्जन्मनिज्ञेयं।गतिरितितथाच ॥ षष्ठसप्ताष्टमस्थानानामन्यतरस्थानेकश्चिद्ग्रहोभवति तदातल्लोकगमनं यदिचेतानिस्थानानिशून्यानिभवंति· तत्तथापष्ठाष्टमस्थानेयोद्रेष्काणोभवतितयोर्यौस्वामिनौतयोर्योबलवांस्तदीयलोकगमनम् ॥अथमोक्षयोगाः ॥ गुरुरथेति । ·जन्मनिगुरुर्यदुच्चस्थःसतुलग्नात्षष्ठकेंद्राष्टमान्यतरस्थानेभवतितदामोक्षोभवति इत्येकोयोगः॥ अन्येसर्वग्रहानिर्बला भवंतितदामोक्षः ॥ इतिद्वितीयः ॥ ४७ ॥ २ ॥ अथमोक्षजन्मलग्नान्मरणलग्नाच्चज्ञेयः तथाचलघुजातके ॥ षष्ठाष्टमकंटकगोगुरुरुच्चैर्वावसानलग्नेवा ॥ शेषैरबलैर्जन्मनिमरणेमोक्षगतिमाहुः ॥ ४८ ॥ अत्रायंविशेषविचारः ॥ लग्नाद्द्वादशोद्रेष्काणोमरणकारणतयानिर्दिष्टस्तदीशोबलीयदिरिपुरंध्रस्थोकेंद्रगोवाभवतितदातीर्थेमरणम् ॥ संहितास्कंधेन ग्रहभक्तिप्रकरणेदेशानिरूपितास्तेषुयानितीर्थानितेषुमृतिर्वक्तव्या ॥ तदुक्तंहोराचिंतामणौ ॥नस्युर्नर्याणकायोगाःप्रोक्ता मृत्युद्रकाणजाः ॥ बलिनः केद्रषष्ठाष्टयूनेस्युर्मोक्षहेतवः ॥ ४९ ॥ रविर्मोक्षदृकाणेशोरेवापूर्वतटेमृतिः ॥ शोणस्ययमुनायाश्चकूले दक्षिणकेमृतिः ॥ ५० ॥ चंद्रोमोक्षदृकाणेशस्तदाशोणोत्तरेतटे ॥ अयोध्यायांसरस्वत्यांवेत्रवत्यामथापिवा ॥ ५१ ॥ भौमेचैवतु कृष्णायांगोदावर्य्यांचनर्मदाम् ॥ तीर्थेमृतिर्भवेत् फल्गुतीर्थेमंदा-

किनीतटे ॥ ५२ ॥ बुधश्चैवद्दकाणेशोप्राप्यगंगांचकौशिकीम् ॥ गंभीरांचापिवासिंद्धौसिंधौवालोहितेमृतिः ॥ ५३ ॥ जीवेमोक्षद्द-काणेशेसिंधुंवामथुरांपुरीम् ॥ विपाशांप्राप्यमरणंनिश्चितंयदिमानवः ॥ ५४ ॥ काशीमेरावतींकांचींगंगांरामपुरींतथा ॥ गुरुःकेंद्रगतः स्वोच्चेप्राप्यमृत्युंप्रयच्छति॥५५॥ शुक्रःशतद्रुंसंप्राप्यचंद्रभागामिरावतीम् ॥ गंगांचदेविकांवापिमृत्युंयच्छतितुंगगः ॥ ५६ ॥ शनौप्रभासेमृत्युःस्यात्कुरुक्षेत्रेवटेश्वरे ॥ सरस्वत्यांदृषद्वत्यामित्याहुःपूर्वसूरयः ॥ ५७॥ अथाष्टमस्थानांरव्यादीनामवधिवर्षाणि॥हिल्लाजः॥ छिद्रे ८ स्त्रियामृतिमिनोहिमगुःषडब्देनारांकुजोविपदिरवाक्षियमे २२ थसौम्यः॥मन्वब्दके १४ धनलयंगुरुरिंदुरामे ३१ रोगंसितोभ्र १०समकेस्वपराक्रमंच ॥ ५८ ॥ अथाष्टमभावेराशिफलम् ॥ मेषेष्टमस्थेनिधनंनराणांभवेद्विदेशाद्व्रजनाश्रितानाम् ॥ कथासुरमृत्याथहरेः स्थितानांमहाधमानामपिदुष्कृतानाम् ॥ ५९ ॥ वृषेष्टमस्थेचभवेन्नराणांमृत्युर्गृहेश्लेष्मकृताद्विकारात् ॥ हयासनाद्वाथचतुष्पदाद्वारात्रौतथाहृष्टजनाद्दतानाम् ॥६०॥ तृतीयराशौहिभवेन्नराणांमृतिःस्थितेमृत्युरनिष्टसंगात् ॥ स्नेहोद्भवोवासरसंभवोवागुदप्रकोपादथवाप्रमेहात् ॥ ६१ ॥ कर्केष्टमस्थेचजलोपसंगात्कीटात्तथाचैवविभीषणाद्वा ॥ भवेद्विनाशोऽपरहस्ततोवाविदेशसंस्थस्यनरस्यनूनम् ॥६२ ॥ सिंहेष्टमस्थेचसरीसृपाच्चभवेद्विनाशोमनुजस्यसम्यक् ॥ व्यालोद्भवोवापिवनाश्रितस्यचौरोद्भवोवाथचतुष्पदोत्थः ॥ ६३ ॥ कन्यायदाचाष्टमगा विलग्नात् तदास्त्रवित्तान्मनुजस्यघातात् ॥ स्त्रीणांहिहिंसाद्विप-

शशनाद्दाह्मीणांकृतेचस्वगृहाश्रितस्य ॥ ६४ ॥ तुलाधरेचाष्टमगेचमृत्युर्भवेन्नराणांद्विपदोत्थएव ॥ निशागमेसंस्थकृतोपवासादिलिंबिकोत्थोप्यथवाम्रपातात् ॥ ६५ ॥ स्थानेष्टमस्थेष्टमराशिसंगेनृणांविनाशोवदनोद्भवेन ॥ रोगेणवाकीटसमुद्भवैर्श्चस्थानेस्यसंस्थश्चविषोद्भवोवा ॥ ६६ ॥ चापेष्टमस्थेप्रभवेन्नराणांमृत्युः स्वसंस्थासारिताश्रितानाम् ॥ गुल्मोद्भवेनाभिगदेन वापिचतुष्पदोत्थस्यविसंस्थलस्य ॥ ६७ ॥ मकरस्तुएवम् ॥ घटेष्टमस्थेतुभवेद्विनाशोवैश्वानरः प्रायगतस्यजंतोः॥ नानाद्रवैर्वाव्रणजैर्विकारैर्मृत्युर्भवेद्ग्रामास्थितस्यनूनम् ॥ ६८ ॥ मीनेष्टमस्थेप्रभवेचमृत्युर्नृणामतीसारकृतात्सकष्टात् ॥ पित्तज्वराद्वासलिलामयाद्वारक्तप्रकोपादथवाचशस्त्रात् ॥ ६९ ॥ अथाष्टमेशस्यभावफलंवृद्धयवनः ॥ अष्टमपेलग्नगतेबहुविघ्नैर्दीर्घरोगकृत्स्तेनः ॥ नेष्टानुवादनिरतोलक्ष्मींलभतेनृपतिसंगेन ॥ ७० ॥ निधनपतौधनभवने धनलाभोनैवस्यान्नरश्चौरः ॥ क्रूरे सौम्येतिशुभमंतेक्षितिपालतोमरणम् ॥ ७१ ॥ निधनपतिर्यदिसहजेबंधुविरोधात्सुहृद्विरोधीच॥व्यंगोदुर्बललोलः सोदररहितोभवत्यथवा ॥ ॥ ७२ ॥ निधनेशेतुर्यगतेपितृतोऽन्यायाल्लभेतलक्ष्मीम् ॥ पितृपुत्रयोश्चयुद्धंपिताचरोगान्वितोभवति ॥ ७३ ॥ छिद्रपतौ तनयस्थेसुतविरहितः शुभेससुतः ॥ जातोपिनैवजीवतिजीवत्यपिकितवकर्मरतः ॥ ७४ ॥ छिद्रेशेरिपुसंस्थितेदिनकरेभूभृद्विरोधीगुरौ स्वांगेसीदतिदृष्टिरोगकलितः शुक्रेसरोगीविधौ ॥ भौमेकोपयुतोबुधेहिभयभृद्दुःखाभिभूतः शनौ कष्टंराहुबुधेहितत्रश-

शभृत्सौम्येक्षितेनैवकिम् ॥ ७५ ॥ मृत्युपतौसप्तमगेदुष्टकुलस्त्रीप्रि-
योगुदव्याधिः ॥ क्रूरेभार्याद्वेषीकलत्रदोषान्मृतिंलभते ॥ ७६ ॥
निधनपतौनिधनगतेव्यवसायीव्याधिवर्जितोनीरूक् ॥ कितवक-
लाकुलितवपुः कितवकुलेजायतेविदितः ॥ ७७ ॥ मृतिनाथेन-
वमस्थेनिःसंगोजीवघातकः पापी ॥ निर्बंधुर्निःस्नेहीपूज्येविमुखो
मुखेव्यंगः ॥ ७८ ॥ कर्मस्थेनिधनेशेनृपकर्मानीचकर्मनिरतश्च ॥
अलसः क्रूरोऽन्यभवस्तनयवान्नजीवविमाता ॥ ७९ ॥ लाभस्थे
चाष्टमपेबाल्येदुःखीसुखीभवेत्पश्चात् ॥ दीर्घायुः सौम्यखगेपापेऽ-
ल्पायुर्नरोभवति ॥ ८० ॥ व्ययभवनेष्टमपेक्रूरोवातस्करोनिकृष्ट-
श्च ॥ अनात्मगतिर्व्यंगवपुर्मृतस्तुकाकादिभिर्भक्ष्यः ॥ ८१ ॥ इत्य-
ष्टमभावविचारः ॥८॥ अथनवमभावः ॥ तत्रांकिविचार्य्यमि-
त्युक्तंजातकाभरणे ॥ धर्मक्रियायां हिमनःप्रवृत्तिर्भाग्योपपत्तीं
विमलंच शीलम् ॥ तीर्थप्रयाणंप्रणयः पुराणैः पुण्यालयेसर्वमिदंप्र-
दिष्टम् ॥ १ ॥ विहायसर्वंगणकैर्विचिंत्यंभाग्यालयंकेवलमत्रय-
त्नात् ॥ आयुश्चमाताचपिताचवंशोभाग्यान्वितेनैवभवंतिधन्याः॥
॥ २ ॥ कल्याणकर्मा ॥ लग्नान्निशाकरायावन्नवमंगृहंतद्भवेद्भा-
ग्यम् ॥ अनयोर्योबलयुक्तोभाग्यर्क्षंचिंतयेत्तस्मात् ॥ ३ ॥ भा-
ग्यर्क्षपतिःकस्मिन्कोवाभाग्याश्रितोविहगः ॥ बलवान्मंदंबलोवा
तस्याधिपतिस्तुकारकोज्ञेयः ॥ ४ ॥ अथविचारः ॥ भाग्येस्व-
भोचगखगेशुभभाग्य इज्येवास्वेशदृग्युजिनिजेफलदंपरेन्यैः ॥
केंद्रस्थजीवतनुजन्मभपेःशुभाग्योधीव्यंकलग्न ५ । ३ । ९ । १ ।
गखगैर्यदिभाग्यदृग्वा ॥ ५ ॥ चंद्राद्द्यूना ७ ष्टरिपुदगैःशुभग्रहे-

स्सुभाग्यश्चेद्रैस्वकेष्टलवगेऽह्निजीवदृष्टे ॥ लक्ष्मीयुतोनिशितथा चसितेक्षितेऽथकेंद्रादिगेज्यइनतोऽधममध्यसंज्ञः ॥ ६ ॥ नीचारिगांशगखलाः शुभदृष्टिहीना भाग्येस्थितामलिनदुःखितजन्मकुर्युः॥भाग्येखलाः स्वगृहगाः शुभदृष्टियुक्ताः ख्यातं नरं विपुलसौख्यगुणैः समेतम् ॥ ७ ॥ लग्नपेऽभ्यंतराराशौजन्मकालेगतेसति ॥ भाग्यपेचविशेषेणमहाभाग्योदयोभवेत् ॥ ८ ॥ एकेनमध्यभाग्यः स्यादभावेहीनभाग्यकः ॥ लग्नात्सप्तमभंयावद्राशयोऽभ्यंतराः स्मृताः ॥ ९ ॥ नवमभावपतौरिपुमध्यगोनवमभंरिपुदृष्टयुतंतथा ॥ यदितदापरधर्मरतोनरः शुभखगैरथधर्मरतः स्वके ॥ १० ॥ नीचस्थोवाशत्रुगेहेगतश्चेद्भाग्यस्वामीरिफरंध्रारिगोवा ॥ पापैःखेटैःसंयुतोवाथदृष्टोभाग्यैर्हीनःस्याद्दरिद्रीसदैव ॥ ११ ॥ इतिभाग्याभाग्यविचारः ॥ अथसामान्यविचारेणभाग्यस्थसूर्यादीनां फलं गर्गमतेन ॥ तत्रादौरवेः । हंतिभाग्यंचपुण्यंच सूर्यःपुण्यगतोनृणाम् ॥ तुंगस्वर्क्षगृहंजातपुष्कलंधर्ममादिशेत् ॥ १२ ॥ चंद्र० ॥ मध्यभाग्यंभवेद्धर्मीपितृपक्षपरायणः ॥ धर्मेपूर्णनिशानाथेक्षीणे सर्वविनाशयेत् ॥ १३ ॥ भौम० ॥ कुजेरक्तपटानांहिभवेत्पाशुपतिर्वृतिः ॥ भाग्यहीनश्चसततंनरः पुण्यगृहंगते ॥ १४ ॥ बुध० ॥ मंदभाग्योबुधेपापेनरोबुद्धिमतानुगः ॥ भाग्यवान् धार्मिकोवापिशुभेसौम्येतुधर्मगे ॥ १५ ॥ गुरुफ० ॥ विविधतीर्थकरः सुकलेवरः सुरगुरौनवमेसुखवान्गुणी ॥ त्रिदशयज्ञकरः परमार्थवित्प्रचुरकीर्तिकरः कुलवर्द्धनः ॥ १६ ॥ भृगुफ०॥भवतिभाग्यनिधिर्द्धनवल्लभोबहुगुणीद्विजभक्तिपरायणः॥

निजभुजार्जितभाग्यमहोत्सवोभवतिधर्मगतेभृगुनंदने ॥ १७॥ शनिफ० ॥ दंभप्रधानसुकृतः पितृदैवतवञ्चकः॥क्षीणभाग्यः सुधर्माच स्यान्नरोनवमेशनौ ॥ १८॥ स्वोचेस्वभेशनौभाग्यैवैकुंठादागतोनरः॥राज्यंकृत्वास्वधर्मेणपुनर्वैकुंठमेष्यति ॥ १९॥ राहुफलम् ॥ नीचधर्मानुरक्तःस्यात्सत्यशौचविवर्जितः ॥भाग्यहीनश्चमंदश्चधर्मगे सिंहिकासुते ॥२० ॥ केतु० ॥ नवमस्थानगःकेतुः बालत्वेपितृकष्टकृत् ॥ भाग्यहीनोविधर्मश्चम्लेच्छाद्भाग्योदयोभवेत् ॥२१॥ अथकस्मिन्वयसिभाग्योदयस्तमाह॥भाग्याधिपश्चेयदिकेंद्रसंस्थश्चाद्येवयस्येवसुखोदयःस्यात् ॥ त्रिकोणगः स्वोच्चगतोथवाचेन्मध्येवयस्यस्यफलप्रदःस्यात्॥२२॥ भाग्याधिनाथःस्वगृहेथमित्रगृहेथवास्याद्वयसोंत्यभागे ॥ भाग्योदयंतस्यवदंतितज्ज्ञाः शुभग्रहैश्चयुतेक्षितंच ॥ २३ ॥ अथायुःपर्य्यंतसुखयोगः ॥ नवमभावपतिर्यदिकेंद्रगोनवमपंचमगश्च यदाभवेत् ॥ प्रसवलग्नपतिर्यदितुंगगः सुखसमृद्धियुतोमरणांतकः ॥ २४ ॥ नवमभावगतः स्वगृहेशनिर्भवतिचेत्समहेश्वरयज्ञकृत् ॥ अतिशयंकुरुतेजयसंयुतं नृपतिवाहनचिह्नसमन्वितम् ॥ २५॥ क्रूराधमैधर्महीनंकर्कशंचपलंतथा ॥ सौम्याःकुर्वंतिभाग्याढ्यंदयालुंप्रियभाषिणम् ॥२६॥ गुरुर्भाग्येभवेन्मंत्रीमहाभाग्योऽखिलेश्वरः ॥ अचलेपिशुभेखेटेभाग्यस्थेधार्मिकोनरः ॥ २७ ॥ पूर्णेंदुयुक्तौरविभूमिपुत्रौ भाग्यस्थितौ सत्वसमन्वितौच ॥ वंशानुमानात्सचिवंनृपंवा ॥ कुर्वंतिसौम्योत्थदशाविशेषात् ॥२८॥ अथभाग्यस्थितगुरोरख्यादिदृष्टिफलं होराप्रदीपात् ॥ अर्कदृष्टेगुरौभाग्येमंत्रीनृपसमोथवा॥

कांताभोगीशशांकेनभौमेनधनभाग्भवेत् ॥ २९ ॥ धर्मेबु-धेनशुक्रेणगोवाहनधनान्वितः ॥ दृष्टेसौरेणमहिपस्थावरसंयुतवित्तकः ॥ ३० ॥ समृद्धोधार्मिकोजातस्तेजोरूपगुणान्वितः ॥ स्यात्समस्तग्रहेदृष्टेभाग्यस्थेसुरमंत्रिणि ॥ ३१ ॥ सर्वराज्यप्रदाज्ञेयाभाग्यर्क्षस्थाःशुभग्रहाः ॥ धनस्थाम्बरधान्यायुर्धर्मसौभाग्यवृद्धिदाः ॥३२॥ स्वस्वराशौस्थिताःपापग्रहा भाग्यर्क्षसंयुताः॥ शुभेर्दृष्टानरंकुर्य्युः प्रभूतगुणमुत्तमम् ॥ ३३ ॥ स्वोच्चगःखचरोभाग्येकरोतिविभवान्वितम् ॥ सर्वेशुभेक्षिताभूपंकुर्वंतिविजितद्विपम् ॥ ३४ ॥ सकलशुभअसौम्याः स्वोच्चगाभाग्यराशौकनकधनसमृद्धिश्रेयउत्पादयंति ॥ अथशुभविहंगैर्दृस्तग्रदृष्टानरेंद्रविहतरिपुसमूहंदिव्यकायंसुकांतिम् ॥ ३५ ॥ त्रिचतुःपंचखगेंद्रास्तथाचपट्सप्तसंस्थिता भाग्ये ॥ प्रत्ययिनंधनवंतंकुर्य्युर्नृपतिंबुद्धिरहितम् ॥ ३६ ॥ जनयंतिभाग्यसंस्थागुरुभौमविवर्जिताग्रहाःपुरुषम् ॥ व्याधिप्रायमकांतंधनहीनंबंधनार्तमतिहीनम् ॥ ३७ ॥ उदयभास्करे ॥ नवमेपतनुगेगुरुवीक्षितेनृपपतिर्यदिवांबुपतिस्तनौ ॥ नवपतिर्दिलयेस्वगृहेक्षकः सकलसंपदिनोधरणीपतिः ॥ ३८ ॥ यदिमृतौनवपःकुभगोपिवाद्रुतवियोगिकुवाहपतिर्भवेत् ॥ नवपतौभवगेनृपपूजितस्तदनुकोशवपुःसुखपःस्वजे ॥ ३९ ॥ नवपतिस्तनुगोगजवाहनोथनवभावयुतौगुरुभार्गवौ ॥ नवचतुष्टयपंचमगौतदाप्रवरवाहनदौयदिभाग्यपः॥ निजभगोंबुनि४वासितजीवयुग्बहुधनोध्वाजिनीपतिरीश्वरः ॥ ४० ॥ अथभाग्यस्थगुरोरुपरिद्विग्रहयोगाः ॥ स्यातोनृपसमःप्राज्ञोबहुदारसमन्वितः ॥पितृमातृप्रियोजीवेसमृद्धे-

केंदुवीक्षिते ॥ ४१ ॥ साहसीवाधनीस्वर्क्षेर्थभूत्परधनान्वितः ॥ बलीकुजार्कसंदृष्टेजीवेभाग्यगृहस्थिते ॥ ४२ ॥ सुभगोललितः कांतोधनस्त्रीभूषणान्वितः ॥ जीवेबुधार्कसंदृष्टेभाग्येकाव्यकलाकृतिः ॥ ४३ ॥ सामज्ञोत्सवशीलोगोमहिषाजखरान्वितः॥साहसीकोगुरोभाग्येविमित्रोर्कसितेक्षिते ॥ ४४ ॥ निधीशः संग्रहीप्राज्ञः ख्यातोभाग्येगुरोगुणी ॥ भवेद्देशगुरुश्रेणीनायकोर्कार्किवीक्षिते ॥ ॥ ४५ ॥ इतिरवियोगाः । अथचंद्रयोगाः ॥ सेनाचार्य्योगुरौ भाग्येचंद्रभौमनिरीक्षिते ॥ सौख्यभाक्सुभगः स्फीतोमंत्रीवाजायतेनरः ॥ ४६ ॥ सगेहशयनान्नादिभोगीतेजोन्वितःक्षमी ॥ मतिमाञ्जायतेभाग्येगुरौचंद्रबुधेक्षिते ॥ ४७ ॥ कर्मयुक्तःशुभःशूरःसमृद्धःपरिवारवान् ॥ चंद्रशुक्रेक्षितेजीवेभाग्यस्थेजायतेनरः ॥ ॥ ४८ ॥ विवादशीलः प्रियवाग्व्ययेशेनेक्षितेगुरौ ॥ चिरजीवी चक्रमदोभाग्येचंद्रार्किवीक्षिते ॥४९॥ इतिचंद्रयोगाः ॥ अथ भौमयोगाः ॥ तेजस्वीसत्यवान्सेवारतोनिपुणधीर्नरः ॥ जायतेबुधभौमाभ्यांदृष्टेभाग्यस्थितेगुरौ ॥ ५० ॥ धनी निपुणधीर्विद्वान् सात्यकश्चविदेशगः ॥ भौमभार्गवसंदृष्टेभाग्यस्थेसुरमंत्रिणि ॥५१॥ नीचोविदेशगःप्रेष्यःपिशुनो वंचकोनरः॥ भाग्यराशिगतेजीवेभौममंदनिरीक्षिते ॥ ५२ ॥ अथबुधयोगाः॥ शिल्पवित्सुभगोविद्वान्कृतवेपश्चशीलवान् ॥ गृहीतवचनोजीवे भाग्यस्थेज्ञसितेक्षिते ॥ ५३ ॥ सुभगोललितोविद्वान्वक्ताशूरः सुखीगुरौ ॥ विनीतश्चभवेद्भाग्येबुधमंदनिरीक्षिते ॥ ५४ ॥ अथ भृगु० ॥ राष्ट्राध्यक्षोधनीजीवेभाग्येशुक्रार्किवीक्षिते ॥ पंचदृष्टिफ-

लंजीवेभाग्येनान्यैर्निरीक्षिते ॥ ५५ ॥ समृद्धः पार्थिवोजातस्ते-
जोरूपगुणान्वितः॥स्यात्समस्तग्रहैर्दृष्टेभाग्यस्थेसुरमंत्रिणि ॥५६॥
अथभाग्यस्थरव्यादिद्विग्रहयोगाः ॥ भाग्यर्क्षस्थौदिनेशेंदूकु-
रुतोऽल्पायुषंनरम् ॥ नेत्ररोगिणमाद्यंचसुभगंकलहप्रियम् ॥५७॥
सवक्रोभास्करोभाग्येदुःखितंकलहप्रियम्॥ शूरंप्रचंडंनिपुणंकरोति
नृपवल्लभम् ॥ ५८॥ सबुधोभास्करोभाग्येनिपुणंबहुविद्विपम् ॥
दुःखान्वितंनरंचैवनानारोगसमन्वितम्॥५९॥सजीवोभास्करोभा-
ग्येरोगिणंकुरुतेनरम् ॥ अलंकरणसद्वस्त्रगंधमाल्यप्रियंसदा॥६०॥
सरोगंजनकंनेत्ररोगिणंकलहप्रियम्॥सभृगुर्भास्करोभाग्येभाग्ययुक्
सुमतिंनरम् ॥६१ ॥ शठंधूर्त्तंसरोगंचयुद्धप्रियमनर्थभृत् ॥ निर्ध-
नंकुरुतेभाग्येसूर्य्यार्कीस्वल्पजीविनम् ॥६२॥ अथचंद्रयोगाः॥
समृद्धः सव्रणोमातुरनिष्टोभाग्यसंस्थिते ॥ शशांकेविकलांगःस्या-
द्धरणीसुतसंयुते ॥६३ ॥ विश्रुतोविकलांगःस्याद्बहुवाग्उत्तमोनरः॥
शास्त्रज्ञः पंडितोभाग्येसज्ञेचंद्रेप्रजायते ॥ ६४ ॥ सौभाग्यधनस-
पन्नः सुखीगुणसमन्वितः ॥ उत्तमश्चनरोभाग्येसजीवेहिमरोचि-
षि ॥ ६५ ॥ मातुः सपत्नीकुरुतेव्याधितः कुलटापतिः ॥ समृ-
द्धःपुरुषोभाग्येस्याच्छुक्रेणविधौनरः ॥ ६६ ॥ नरोतिकष्टकर्मा
स्यात्समंदे हिमदीधितौ ॥ भाग्यस्थेजननीवाऽस्याजायतेस्वकु-
लच्युता ॥६७॥ अथभौमयोगाः ॥ प्रधानशास्त्रकुशलः सुभगो
भोगसंयुतः ॥ नित्योद्विग्नोनरोभाग्येसज्ञेभौमेप्रजायते ॥ ६८ ॥
सजीवेभूमिजेभाग्येपूज्योधान्यधनान्वितः ॥ व्याधितांगोनरोक्लि-
ष्टो जायतेव्रणसंयुतः ॥ ६९ ॥ परदेशगतः क्रूरः प्रचंडः पर-

शनिवृद्धंसममपरंनिष्ठुरंपिशाचार्त्तम् ॥ ८३ ॥ रविकुजजीवा भाग्येजनयंतिनरंसदोयुक्तम् ॥ देवपितृपूजनरतंसमृद्धदारंगुणसमृद्धंच ॥ ८४ ॥ कलहप्रियंकुलीनंकन्यानांदूषकंचकर्मचपलम् ॥ दिनंकरभौमशुक्रा भाग्येद्वेष्यंनरंकुर्य्युः ॥ ८५ ॥ साहसिकंक्षतिक्षुद्रलोकद्वेष्यंप्रियानृतंक्रूरम् ॥ पित्रारहितंबाल्येकुर्य्युः सूर्य्यारसूर्य्यजाभाग्ये ॥ ८६ ॥ रविबुधगुरवोभाग्येभाग्यसमेतंधनान्वितंसुभगम् ॥ नृपतिप्रियंनुवेषंजनयंतिनरंसुपुत्रंच ॥ ८७ ॥ रविबुधशुक्रा भाग्येजनयंतिनरंप्रकाशितंशांतम् ॥ रिपुपक्षपरिक्षीणंनृपतिसमंसारवचनंच ॥ ८८ ॥ पापंपरदाररतंप्रवासशीलंचनिपुणपरम् ॥ भृतकंमदनपरंरविबुधसौरानरंभाग्ये ॥ ८९ ॥ भाग्येरविगुरुभृगवोमनुजंकुर्य्युः सुपंडितं कांतम् ॥ बहुविपयंत्वतिवीरंजनयंतिसुमेधसंप्राज्ञम् ॥ ९० ॥ रविसुरगुरुरविजाभाग्येपुरुषस्यजन्मजातस्य ॥ सभवत्युत्तमपुरुषो राजगुणवान्धनसमृद्धश्च ॥ ९१ ॥ कांतिविहीनंमलिनंभूपतिपरिदंडितंमतिहीनम् ॥ जनयंतिनरंभाग्येरविशुक्रशनैश्चरामूर्खम् ॥९२॥ इतिरव्यादित्रययोगाः १५ ॥ अथचन्द्रादित्रययोगाः ॥ ॥ १० ॥ धनकनकरत्नभाग्यंजनयंतिशशांककुजबुधाः पुरुषम्॥ प्रथमेवयसिसुतमंभाग्यगृहेसर्वनाशंच ॥ ९३ ॥ चंद्रधरासुतगुरवः कुर्वंतिनरंजितेंद्रियंप्राज्ञम् ॥ गुरुदेवसाधुनिरतंविद्याधरम्भोगिनंसुभगम् ॥ ९४ ॥ सव्रणगात्रमरूपंप्रभाक्षीणंस्त्रीप्रियंयुवतिवश्यम् ॥ युवतिविनाशितसारंशशिकुजभृगुनंदनाभाग्ये ॥ ॥९५॥ व्यापन्नमातृवंशंक्षुद्रंबाल्येनिराकृतंमात्रा॥ शशिभूमिजर

विपुत्रा जनयंतिनराधिपंभाग्ये ॥ ९६ ॥ शशिबुधजीवा भाग्ये कुलवंशविवर्द्धनंकुर्य्युः ॥ आचार्य्यंविभवमित्रंनृपतिंबहुसाधनोपेतम् ॥ ९७ ॥मातृसपत्नीजनकंमुदितंमानान्वितंप्रचुरपितरम्॥ कुर्वंतिसौम्यशीलंशशिबुधशुक्रानरंभाग्ये ॥ ९८ ॥ शशिबुधसौरानवमेक्लीबाचारंसुविह्वलंमलिनम् ॥ जनयंतिकुत्सितधियं संग्रामपराङ्मुखंदीनम् ॥ ९९ ॥ चंद्रबृहस्पतिशुक्रा भाग्येजातस्ययस्यपुरुषस्य ॥ सभवतिनरपतितुल्योनृपतिकुलेभूपतिश्चैव॥ ॥ १०० ॥ शशिगुरुसौराभाग्येकुर्वंतिनरंप्रियालापम् ॥ तत्परवृतंसुशीलंविख्यातंसर्वशास्त्रकुशलंच ॥ १०१ ॥ शशिशुक्रयमाभाग्येकपिवृत्तिमरिपोषणानुरतम् ॥ कुर्य्युर्मनुजमपापंशूरातिथिगुरुस्वजनभक्तम् ॥१०२॥ इतिचंद्रादित्रययोगाः॥१०॥ अथ भौमादित्रययोगाः॥ कुजबुधगुरवोभाग्येकुर्वंतिनरंसदासत्यम् ॥ जनवल्लभंसुशीलंह्यतिनिपुणंभाग्यसंयुक्तम् ॥ ३ ॥ कुजबुधशुक्रा भाग्येकुर्वंतिनरंमहोत्साहम् ॥ बहुविषयपतिंख्यातंनरेंद्रसत्कारसत्कृतंचंडम् ॥ ४ ॥ कुजसौम्ययमाभाग्येकुर्य्युःपरतर्ककंवचन गूढम् ॥ मलिनंखंडाकारंपरकार्य्यनाशकंनरंनूनम् ॥ ५ ॥ अथ बुधादित्रययोगाः ॥ बुधगुरुशुक्राभाग्येजनयंतिनरंसुरोपमंसुशीलंच ॥ विख्यातंनरनाथंविद्वांसंधर्मशीलंच ॥ ६ ॥ पुष्टंपुरगुणमुख्यंप्राज्ञंनृपतिसचिवंप्रकाश्यंच ॥ धनिनंविधेयभृत्यंबुधगुरुशनयो नरंभाग्ये ॥ ७ ॥ बुधशुक्रसूर्यपुत्रानवमस्थानस्थिताःप्रकुर्वंति ॥ मेधाविनंप्रकाश्यंसुरुचिरवाक्यंसुखोपेतम् ॥ ८॥ अथगुर्वादित्रययोगः ॥ त्रिदशगुरुशुक्रसौराभाग्यग्रहस्थानरंप्रकुर्वंति ॥ प्रचु-

रान्नपानविभवंसुस्थितसुभगंसुरूपंच ॥ ९ ॥ अथरव्यादिचतुर्ग्रहयोगाः ॥ रविचंद्रभौमशशिजा जन्मनिभाग्यर्क्षमाश्रितायस्य ॥ सभवत्युत्तमपुरुषोविदेशगोनित्यसंहृष्टः ॥ १० ॥ सूर्य्यशशिभौमगुरवो भाग्यगृहस्थानरंकुर्य्युः ॥ धनिनंविद्याकुशलंसुभगंनृपसमंचैव ॥ ११ ॥ रविचंद्रभौमशुक्रा मायाचतुरंस्वदारसंतुष्टम् ॥ जनयंतिनरंसुभगंसमस्तजनवल्लभंख्यातम् ॥ १२ ॥ रविचंद्रभौमसौराः पिशुनंमायाविनंसुशीलंच ॥ जनयंतिसदाभाग्येपुरुषंबहुनीचकर्माणम् ॥ १३ ॥ रविशशिबुधसुरगुरवोजन्मनिभाग्यर्क्षमाश्रितायस्य ॥ पुरुषंप्रधानमखिलंनरेंद्रपूज्यंसदाहृष्टम् ॥ १४ ॥ रविचंद्रसौम्यशुक्रानरेश्वरंधार्मिकंसमृद्धंच ॥ जनयंतिभाग्यसंस्थाःपुरुषंप्रियवादिनंशांतम् ॥१५॥ तरणिशशिसौम्यसौराजन्मनिभाग्यस्थितानरंकुर्य्युः ॥नीचाचारंदीनंपरस्वहरणेसदासक्तम्॥१६॥रविचंद्रगुरुसिताश्चेज्जन्मनिभाग्येनरंसुधियम् ॥उत्पादयंतिहृष्टंधर्मज्ञंसात्विकंसदाधीरम् ॥१७॥धर्मपरंसुरभक्तंविद्वांसंपरगृहेषुभोक्तारम्॥रविचंद्रजीवसौराभाग्यर्क्षस्थानरंकुर्य्युः ॥१८॥ रविभूसुतबुधजीवाजन्मनिभाग्येनरंमकुर्वंति॥देवपितृपूजनपरंवृद्धाचारंगुणोपेतम्॥१९॥रविभौमसौम्यशुक्रा भाग्येजनयंतिनिष्ठुरंसुभगम् ॥ साहसनिरतंधूर्तंरिपुपक्षमर्दनंचैव ॥ २० ॥ रविभौमचंद्रसौराभाग्येयस्येहजायमानस्य ॥ सभवतिपरवादरतोविनष्टकोपःसदादीनः ॥ २१ ॥ रविभौमजीवशुक्रा लोकद्वेषंनरंपिपासार्तम् ॥ जनयंतिभाग्यसंस्थाःकन्यानांदूषकंवाल्ये ॥२२॥ रविभौमजीवसौरा भाग्येसुरवर्जितंसदोयुक्तम् ॥ जनयंतिनरंचं-

डंविक्रमयुक्तंसदासत्वम् ॥ २३ ॥ रविभौमशुक्रशनयोरिपुक्षया-
द्विगतशोकम् ॥ कुर्वंतिनरंनृपलंभाग्यगताशत्रुवर्जितंचैव ॥२४॥
रविबुधजीवसिताःस्युर्भाग्येजन्मनियस्येहपुरुषस्य ॥ सभवत्युत्त-
मपुरुषोधनकनकैश्वर्य्यसंपन्नः ॥ २५ ॥ रविबुधगुरुरविपुत्राभा-
ग्येजनयंतिमानिनंधन्यम् ॥ पापंपरदाररतंविद्विष्टंनीचकर्माणम् ॥
॥ २६ ॥ रविबुधसितसौराःस्युर्भाग्यस्थामानिनंसुभगम् ॥ जनयं-
तिधनसमेतंसत्यरतंलोकविख्यातम् ॥२७॥ रविगुरुसितभानुसुता
भाग्यर्क्षसंस्थिता नरंकुर्य्युः ॥ सत्यव्रतंसुवाक्यंगुरुदेवतातिथिपुभ-
क्तम् ॥२८॥ इतिरव्यादि४ग्रहयोगाः ॥अथचंद्रादि४ग्रहयो-
गाः॥चंद्रकुजज्ञसुरेज्या जनयंतिनरंपरिच्छदसमृद्धंच ॥ बाल्येमा-
तृवियुक्तंधनान्वितंसंस्थिताभाग्ये ॥ २९ ॥ चंद्रकुजसौम्यशुक्रा
भाग्येजनयंतितापसंख्यातम् ॥ वाग्मिप्रणयसमेतंपरलोकपरंमहा-
प्राज्ञम् ॥ ३० ॥ चंद्रकुजसौम्यसौराः जनयंतिनरंपराङ्मुखंदी-
नम् ॥ क्षुद्रंमायाचतुरंपरदाररतंस्थिता भाग्ये॥३१॥चंद्रकुजजी-
वशुक्राः नृपवंशकरंप्रधानमतिशूरम्॥विद्याधनसुसमृद्धंविख्यातंलो-
कसंमतंभाग्ये ॥ ३२ ॥ शशिबुधसुरगुरुशुक्रा जन्मनिभाग्यर्क्ष-
माश्रितायस्य ॥ जनयंतिधर्मसंस्थंनरंकलासुनिपुणंच ॥ ३३ ॥
शशिबुधसितरविपुत्रा जन्मनिभाग्यस्थिता नरंकुर्य्युः ॥ माया-
विनंप्रचंडंकिंचिन्नयविशारदंधन्यम् ॥ ३४ ॥ चंद्रगुरुशुक्रसौरा
जनयंतिनरंसुमेधसंप्राज्ञम् ॥ धनकनकरत्नसमेतंसुभगंसदासंस्थिता
भाग्ये ॥ ३५ ॥ इतिचन्द्रादियोगाः ॥ अथभौमादि ४
ग्रहयोगाः ॥ भौमबुधजीवशुक्राजन्मनिभाग्यस्थिताःप्रकुर्वन्ति॥

भार्याविनंभचडंरणेपुपूज्यंनरंधीरम् ।३६॥भौमज्ञसूरिशनयोभाग्य-
स्थानोपगाः प्रकुर्वंति॥ रिपुपक्षपरिक्षीणंरणेप्रचंडंसुधीरंच ॥३७॥
भौमज्ञशुक्रशनयोनरंविदेशंधनैःपरित्यक्तम्॥ क्षुत्क्षयाविहीनंदुःस-
स्वंसंस्थिताभाग्ये॥३८॥ अथबुधादि४योगाः॥ बुधगुरुसित-
रविपुत्राजन्मनिभाग्यस्थितानरंकुर्य्युः॥ परवादविवादरतंपर-
दारभीतिमन्तंच॥ ३९॥ इतिचतुर्ग्रहयोगाः॥ त्रिचतुःपंच-
खगेंद्रास्तथाचपट्संस्थिता भाग्ये॥ .प्रत्यर्पितधनवित्तंकुर्य्यु-
र्नृपतिंचबुधरहिताः॥ ४०॥ जनयंतिभाग्यसंस्था गुरुभौम-
वर्जिताग्रहाः पुरुषम्॥ व्याधिप्रायमकांतंधनरहितंबंधनार्त्तमति-
हीनम्॥ ४१॥ एवंबहुप्रकारैर्भाग्यगृहेबादरायणादिभिरुक्तम्॥
गृहयोगैः सद्भवनैर्विचिंत्यबुधोवदेदन्यत्॥ ४२॥ अथभाग्य-
स्थरव्यादीनामवधयः॥हिल्लाजः॥तीर्थंचधर्मकृदिनोनवमेथचंद्र-
स्तीर्थंनखे २० ऽसृगिहयातभयंचशक्रे १४॥ गोक्ष्यब्द२९ मा-
तृमृतिमिंदुसुतोथजीवस्तित्थ्यब्दके१२ पितृमृतिंचसितोत्रलक्ष्मीम्
॥ ४३॥ अथभाग्येराशिफलम्॥ धर्मस्थितेत्रवहिमेषराशौच
तुष्पदोत्थंप्रकरोतिधर्मम्॥ तेषांप्रदानेनचपोपणेनदयाविपाके पशु-
पालनेन॥४४॥ वृषेचधर्मप्रगतेमनुष्योधर्मंकरोत्येवधनप्रभूतम्॥
विचित्रदानैर्बहुगोप्रदानैर्विभूषणाच्छादनभोजनैश्च॥ ४५॥ तृ-
तीयराशौप्रकरोतिधर्मंधर्मस्थितेधर्मकृतंसदैव॥ अभ्यागतोत्थ
द्विजभोजनाद्यादीनानुकंपाश्रयमानसेन॥ ४६॥ ग्रतोपवासैर्विप-
मैर्विचित्रैर्धनंनरैःसंकुरुतेसदैव॥ धर्माश्रितेचैवचतुर्थराशौतीर्था-
श्रयाद्यापनसेवयाच॥ ४७॥ तत्रस्थितेचाथहिमिंहराशौधर्मप-

रेषां प्रकरोतिमर्त्यः ॥ स्वधर्महीनोपिक्रियाभिरेवसुतीर्थरूपंविनये-
नहीनम् ॥ ४८ ॥ धर्माश्रितःस्याद्यदिपष्ठराशिः स्त्रीधर्मसेवांकुरुते
सदैव ॥ विहीनवृत्तिर्बहुजन्मनाचपाखंडमाश्रित्यतथान्यपक्षम् ॥
॥४९॥तुलाधरेधर्मगतेमनुष्योधर्मंकरोत्येवसुसिद्धधर्मः॥ देवद्विजा-
नांपरितोषणेनजनानुरागेणतथार्भकाणाम्॥५०॥ चापेतथाधर्मग-
तेमनुष्यःकरोतिधर्मंद्विजतोषणोत्थम्॥स्वात्मप्रियंशास्त्रविनिर्मितंच
प्रभूततोपंप्रथितंनृलोके॥५१॥धर्माश्रितेवैमकरेमनुष्योचापोत्थधर्मं
कुरुतेप्रतापम्॥पश्चाद्विरंत्येवसमांगनाभिःकौल्यंसमाश्रित्यसदास्व-
पक्षम्॥५२॥ कुंभश्चधर्मोपगतश्चधर्मंपुंसांविधत्तेसुरसंघजातम् ॥वृ-
क्षाश्रयोत्थंचतथाग्निजातं आरामवापीप्रभवंसदैव ॥ ५३ ॥ धर्मा-
श्रितेचैयहिमीनराशौकरोतिधर्मंविविधंनृलोके ॥ सत्रप्रपारामतडा-
गजातंतीर्थार्जनेनोत्थमखैर्विचित्रैः ॥५४॥ अथभाग्यभावपति-
फलम् ॥ जन्मप्रदीपात् ॥ लग्नगतेनवमपतौदेवान्गुरून्मन्यते
शूरः ॥ कृपणः क्षितिपतिकर्मास्वल्पग्राहीभवतिमतिमान्॥५५॥
नवमाधिपेतुधनगेनृपलोविदितःसुशीलवान्सत्यः ॥ सुकृतीवदन-
व्यंगः चतुष्पदोत्पन्नपीडार्तः ॥ ५६ ॥ सहजगतेसुकृतपतौरूप-
सीबंधुवत्सलः पुरुषः ॥ बंधुस्त्रीरक्षणकृद्यदिजीवतिबंधुभिः
सहितः ॥ ५७ ॥ सुकृतेशेहिबुकगतेपितृभक्तः पितृपूजकोविदि-
तः ॥ सुकृतिर्मित्रसुवर्गेउत्तमकर्मणिरतिर्भवति ॥ ५८ ॥ सुकृते-
शेसुतसंस्थेसुकृतीगुरुदेवपूजनेनिरतः ॥ वपुषासुंदरमूर्तिःसुकृतिस-
मेता भवंतिसुताः ॥ ५९ ॥ शत्रुप्रणतपरायणधर्मंकलितंकलावि-
कलदेहम् ॥ दर्शननिद्रानिरतं सुकृतपतिः षष्ठगः कुरुते ॥६०॥

नवमपतौसप्तमगेसत्यवतीसुवचनासुरूपाच ॥ शीलश्रीयुतदयिता सुकृतयुताजायतेनियतम् ॥ ६१ ॥ दुष्टोजंतुविघातीगृहबंधुविवर्जितः सुकृतरहितः ॥ नवमेशेमृत्युगतेक्रूरः खंडस्तुविज्ञेयः॥६२॥ सुकृतपतिः सुकृतगतः सुबंधुभिः प्रीतिमतुलितंसत्वम्॥ दातारंदेवगुरुस्वजनकलत्रादिषुचभक्तम् ॥ ६३ ॥ नृपकर्माणंशूरंमातापित्रोश्चपूजकंपुरुषम् ॥ धर्मख्यातंकुरुतेसुकृतपतिर्गगनगृहलीनः॥ ६४ ॥ दीर्घायुर्धर्मपरोधनेश्वरः स्नेहलोनृपतिलाभी ॥ सुकृतेख्यातः.सततंसुकृतपतौलाभभवनस्थे ॥ ६५ ॥ द्वादशगेसुकृतेशेमानीदेशांतरे सुरूपश्च ॥ विद्यावाञ्छुभखेटेक्रूरेखेटेभवेत्कुमतिधूर्तः॥६६॥इतिभाग्यभावविचारः ॥९॥ अथकर्मभावः ॥ तत्रकिंविचार्य्यमित्युक्तंजातकाभरणे ॥ व्यापारमुद्रानृपमानराज्यंवियोजनंचापिपितुस्तथैव ॥ महत्पदाप्तिःखलुसर्वमेतद्राज्याभिधानेभवनेविचार्य्यम् ॥ १ ॥ समुदितमृषिवर्यैर्मानवानांप्रयत्नादिहहिदशमभावेसर्वकर्मप्रकाशम् ॥ गगनगपरिदृष्टाराशिखेटस्वभावैः सकलमपिविचिंत्यंसत्त्वयोगात्सुधीभिः ॥ २ ॥ यद्यप्यनेकानिवदंतितज्ज्ञा नानाविधार्थानिफलानिकोव्यः॥तथापिसंसारसमुद्रमध्येभुंक्तेनरः कर्मफलानिचैव ॥ ३ ॥ अथसामान्यविचारेणकर्मस्थरव्यादीनांफलानि।तत्ररविफलम् ॥ शूरोवाहनधीवीर्य्यविभवात्मजवान्रवौ ॥ प्रसह्यकर्मगेधृष्यः सिद्धारंभश्चजायते॥४॥चंद्रफलम् ॥ सिद्धारंभः शुचिःकर्मपरः शूरोधनान्वितः॥धर्मवांश्चविवादीचविलग्नात्कर्मगेविधौ ॥ ५ ॥ भौमफलम् ॥प्रधानसेवकः शूरः प्रतापीधनपुत्रवान् ॥ कर्मयुक्तः कु-

जेधृण्योनरः स्याद्दशमस्थिते ॥ ६ ॥ धीमान्धीरोधर्मचेष्टः धर्मवृत्तियुतः सदा ॥ सात्विकः कर्मगेसौम्येनानालंकारवान्नरः ॥७॥ यशवाहनसौख्यार्थगुणसत्यसमन्वितः ॥ सिद्धारंभोतिचतुरोभव्यकर्मस्थितेगुरौ ॥ ८ ॥ विवादार्जितमानार्थरतिकीर्तिसमन्वितः ॥ मतिमांश्चधनीख्यातोनरः स्यात्कर्मगेसिते ॥ ९ ॥ भवेद्वृन्दपुरग्रामपतिर्वादंडनायकः ॥ प्राज्ञः शूरोधनीमंत्रीनरः कर्मस्थितेशनौ ॥१०॥ सेवार्जितधनः क्रूरः कृपणः पक्षघातकः ॥ जंघारोगीनीचशत्रूराशिस्थेकर्मगेशनौ ॥ ११ ॥ भवेद्वृंदपुरग्रामयतिर्वादंडनायकः ॥ कर्मस्थितेतमेप्राज्ञः शूरोमंत्रीधनान्वितः ॥ १२ ॥ गुदामयोश्लेष्मवृत्तिर्म्लेच्छकर्माचमानवः ॥ परदाररतोनित्यंकेतौदशमगेगृहे ॥ १३ ॥ **गर्गमतेन** ॥ कर्मस्थानंगृहेर्युक्तंयदिवादृष्टिवर्जितः ॥ तदादारिद्रदोषेणपरिभ्रमतिमेदिनीम् ॥ १४ ॥ अथ-**विशेषविचारः**॥ **कल्याणवर्म्मा**॥ लग्नाद्दशमेराशौकर्मनृणांयत्प्रकीर्तितंमुनिभिः ॥ राशिग्रहस्वभावैर्ग्रहदृष्टचातत्प्रवक्ष्यामि ॥ ॥१५॥ होरेंद्वोर्बलयोर्यद्दशमस्तत्स्वभावजंकर्म ॥ तस्याधिपतिविवृद्धयावृद्धिर्ज्ञेयाऽन्यथाहानिः ॥ १६ ॥ जांगलमथवारूपंतथोभयंवागृहंनिरीक्षंते ॥ ग्राम्यमरण्यभवंवासौम्यर्क्षेपापभवनेवा॥ १७॥ द्विपदचतुष्पदरूपंसरीसृपंचतथोभयरूपम् ॥ यद्रूपंतद्भवनंप्रसवेबुधैवदेतयत्नेन। १८।तनोःसकाशाद्दशमेशशांकेवृत्तिर्भवेत्तस्यनरस्यनित्यम् ॥ नानाकलाकौशलवाग्विलासैःसर्वोधमैःसाहसकर्मभिश्च। १९॥ **अथकर्मचिंता** ॥लग्नाद्विधोर्बलयुताद्दशमंचकर्मस्वेशाख्यदृष्टमथवा शुभदृष्टयुक्तम् ॥ तत्सौख्यवृत्तिदमथोखलखेटयुक्तंदृष्टंमयासभव-

वृत्तिकरंवदंति ॥ २० ॥ख १० स्थेखपेंगविधुतःख १० नवांशपे वास्वोच्चांशकेस्वालवभेसुखवृत्तयःस्युः ॥ नीचारिभागगृहगेऽल्पसुखाल्पपुण्योदासोपचारभृतकानुचराश्वदासाः ॥ २१ ॥ खे १० वितिसतावथशशीचख १० गोथजीवः खे १० स्यान्नृपात्तविभवोऽखिलकर्मसिद्धिः ॥ कर्मण्यगुःस्वगृहगःकुजशुक्रसौम्यैर्युक्तेक्षितःक्षणधनर्द्धिधनक्षयोस्तः ॥ २२ ॥ अर्थोमिरंग १ विधुतो दशमेर्कमुख्यैस्तातादिकाऽरिहितबंधुकलत्रभृत्यैः ॥ तैर्वायलाभधनगैःस्वसुहृद्रिपुभ्यःस्वेष्टारिगैर्बहुविधावलिभिः शुभैस्तैः ॥ २३ ॥ अन्यच्च ॥ सूर्यादिभिर्व्योम्निगतैर्विलग्नादिंदोःस्वपाकेक्रमशःप्रकल्प्याः ॥ अर्थोपलब्धिर्जनकाज्जनन्याःशत्रोर्हिताद्भ्रातृकलत्रपुत्रात् ॥ २४ ॥ रवीन्दुलग्नास्पदसंस्थितांशपतेस्तुवृत्त्यापरिकल्पनीयम् ॥ सदोपधोर्णतृणयुक्सुवर्णेदिवामणिर्वृत्तिविधिंविधत्ते ॥ २५ ॥ नक्षत्रनाथोत्रकलत्रतश्चजलाश्रयोत्पन्नकृतिःक्रियादेः ॥ कुजोमिसात्साहसधातुशस्त्रैः सोमात्मजःकाव्यकलाकलापैः ॥ २६ ॥ जीवोद्विजन्माकरदेवधर्मैः शुक्रोमहिष्यादिकरौप्यरत्नैः ॥ शनैश्चरोनीचतरप्रकारैः कुर्यान्नराणांखलुकर्मवृत्तिम् ॥ २७ ॥ अन्यच्च ॥ कर्मस्वामीग्रहोयस्यनवांशेपरिवर्तते ॥ तत्तुल्यकर्मणावृत्तिंनिर्दिशंतिमानीषिणः ॥ २८ ॥ मित्रारिगेहापगतैर्नभोगैस्तरस्ततोर्थः परिकल्पनीयः ॥ तुंगेपतंगेस्वगृहेत्रिकोणेस्यादर्थसिद्धिर्निजबाहुवीर्यात् ॥ २९ ॥ अथकर्मस्थमेषादिवर्गफलम् ॥ आरामपात्रलिपिभिर्वणिजाद्यदूतसेवादिवृत्तिकपिभिर्दशमेऽजवर्गे ॥ गंधान्यादिभिर्गांत्रिचतुष्पदार्यवर्गोत्रकर्मणिवृपस्यविहंगवृत्तिः ॥ ३० ॥ मुक्तादिविद्रु-

मजलोत्थवणिक्क्रियाभिर्लिप्यादिशंखधवलैर्मिथुनस्थवर्गे ॥ श-
स्त्राग्नियोनिपरिपोषणशंखमुक्ताविद्यादिकाव्यकृतिभिःखलुकीटवर्गे
॥ ३१ ॥ अन्नादिकाष्ठविपणेनसुवर्णरौप्यवीर्य्यादिकर्मकृपि-
धान्यमयैश्चसिंहे ॥ गंधर्वशिल्पिकरिरामयकर्मकृत्यैःकन्या-
गणेसुगणितःशकटैर्नभस्थे ॥३२॥ हैरण्यगोमहिषधान्यवणिग्वि-
पण्यमूलैःफलैर्नृपतितोधटजैर्वरस्थे ॥ स्त्रीसंगमामाविभवैःकृपिका-
लचौर्य्याचैकित्सकान्नृपभृतोदशमाभिवर्गे ॥ ३३ ॥ भैषज्यगोऽ-
श्वरसकाष्ठजयंत्रविद्याभूपादिमंत्रगिरिदुर्गभृतश्चचापे ॥ पण्यांगना-
वणिजवारिविपंचिवित्ताःश्रेष्ठारसायनरताश्चमृगोत्थवर्गे ॥३४॥श-
स्त्राग्निभेदखननादिकचौर्य्यभारस्कंधोपवृत्तिरतिबाहुबलाद्घटोत्थे ॥
शस्त्राजलायोनिभमोषणाद्दास्यविक्रमादंबरगेझषोत्थे ॥ ३५ ॥
खस्थेखपेखद्रक्काणेखलवेभेखभांशगे ॥ चापांशेतुगतंकर्मरवोर्बा-
शर्क्षेखिलंशुभम् ॥ ३६ ॥ शत्रुनीचलवर्क्षस्थेदास्यंश्रेष्ठाधमं
पुनः ॥ सदसद्वक्षसौम्योग्रयुग्वातत्स्वदशासुच ॥ ३७ ॥ सूर्या-
न्यदेशांतरविक्रमेण चंद्रस्तुधर्मस्थितदासभावम् ॥ जीवस्तुभ-
द्राक्षतमर्थतोथवाबुधस्तुवाक्योपचयापरार्धैः ॥ ३८ ॥ नियो-
गशुभंवनितार्थतोवाशुक्रः कुजःसैन्यबलावकष्टम् ॥ अनाथदुः
खोपहतंचसौरस्तथातथैतेपुचयोविपाकः ॥ ३९ ॥ अथकर्म-
भावेद्विग्रहयोगा होराप्रदीपे ॥ सुदेहोनिर्जितारातिर्निर्दयो-
बलनायकः ॥ दुःशीलोराजसोलग्नात्सूर्य्येन्द्वोःकर्मसंस्थयोः ॥
॥ ४० ॥ भृतकोविफलारंभःप्रधाननृपसेवकः ॥ नित्योद्विग्नश्चवि
कलःकर्मण्यादित्यभौमयोः ॥ ४१ ॥ गजाश्वमेदिनीनाथोवि-

ख्यातोजायतेनरः॥कर्मणिज्ञार्कयोरेवंनीचगृहसंस्थयोः ॥४२॥
निंद्यकुलेपिसंभूतोनृपःस्यादर्कजीवयोः ॥ कर्मस्थयोर्यशः सौख्य-
सन्मानविभवान्वितः ॥ ४३ ॥ नरेंद्रचरितेशास्त्रेनिपुणः कर्म-
संस्थयोः ॥ सख्यर्थवाहनैर्युक्तोवह्वारंभोर्कशुक्रयोः ॥४४॥ न-
रोविदेशगःप्रेष्यःस्याद्व्योम्निरविमंदयोः ॥ किंचिद्धूयात्समाप्नोः
तिचौरामुण्णंतितत्क्वचित् ॥ ४५॥ अथचंद्रादियोगाः ॥ ग-
जाश्वकोशसंपत्तिर्मतियुक्तंशशीनरम् ॥ कुरुतेभौमसंयुक्तोगगने
विक्रमान्वितम् ॥ ४६ ॥ ख्यातोमानीधनीभूपोमंत्रीव्योम्नींदुसौ-
म्ययोः ॥ वयसोंत्येभवेद्दुःखीवंधुस्वजनवर्जितः ॥ ४७ ॥ व्यो-
म्नींदुजीवयोर्विद्याद्दातामानार्थकीर्तिमान् ॥ स्फीतोलंबभुजःसर्व-
नमस्योजायतेनरः ॥ ४८ ॥ मंत्रीवहुजनःख्यातःक्षमायुक्तोनृपोऽ
थवा ॥ मानज्ञोविभवैर्युक्तोव्योम्निशीतांशुशुक्रयोः ॥ ४९ ॥
ख्यातोविनिर्जितारातिर्नृपतिःस्याद्वियोपितः ॥ सूर्यपुत्रयुतेचं-
द्रेविलमात्कर्मणिस्थिते ॥ ५० ॥ अथभौमादियोगाः ॥ शूरः
समतितेजस्वीभूमिपाभिमतोनरः ॥ क्रूरःसेनापतिर्धीरःकर्मणिक्षि-
तिजज्ञयोः ॥ ५१ ॥ प्रभूतपरिवारार्थःपार्थिवःकीर्तिमान्भवेत् ॥
व्योम्निकर्मसमर्थश्चसंस्थयोर्भौमजीवयोः ॥ ५२ ॥ शस्त्राचार्यो
माल्यवस्त्रविद्यार्थमतिसंयुतः॥ सितारयोर्भूपमंत्रीस्त्रीतुल्यतनुरंवरे॥
॥ ५३ ॥ अप्रामार्थोनृपात्तेनदंडितश्चापराधतः ॥ कुजसूर्य्यज-
योर्व्योम्निभ्रष्टद्विजवर्जितः ॥ ५४ ॥ अथबुधादियोगाः ॥ भूपो
विनीतोमंत्रीवामानाज्ञाख्यातिसंयुतः॥सुताभिचारोदशमेसंस्थयोर्बु-
धजीवयोः॥५५॥नीतिवित्सकलारंभःसाधुर्नीचानुगोनृपः॥समर्थ-

श्वनृपाढ्यश्चकर्मणींदुजशुक्रयोः ॥५६॥ असाधुर्मलिनोमूर्खःप्रेष्यश्चासत्यवाग्भवेत् ॥परोपकारीमनुजोव्योम्निबोधनमंदयोः ॥५७॥ अथगुर्व्वादियोगाः॥ जीवभार्गवयोर्भूयोमानाज्ञाविभवान्वितः॥ बहुभृत्यः सुशीलश्चजायतेकर्मसंस्थयोः ॥ ५८ ॥ अथभृगुशन्योर्योगः॥विशिष्टकर्माविख्यातः सर्वद्वंद्वविवर्जितः ॥ नृपमंत्रीभवेद्व्योम्निसंस्थयोः शुक्रमंदयोः ॥ ५९ ॥ मेषूरणस्थिते ह्यर्येरेवमेवनरात्र्यरैः ॥ द्वियोगकल्पनायुक्त्याफलंवाच्यंमनीषिभिः॥६०॥अथचंद्रात्कर्मचिंता ॥चंद्रात्कर्मस्थितेसूर्य्येसिद्धारंभोधनान्वितः ॥ सात्विकोनृपतुल्योवाभवेद्दुर्जनाश्रयः ॥६१॥ प्रत्यंतवासीविषमोलुब्धः क्रूरोतिसाहसी ॥ निषादचरितश्चैवभौमे कर्मणिसंस्थिते ॥ ६२॥ बहुपुत्रोधर्मविद्वाञ्छिल्पविद्धननायकः ॥ प्राज्ञःख्यातोभवेच्चंद्राचंद्रजेकर्मसंस्थिते ॥ ६३ ॥ शुभाचारोविशुद्धार्थःसमृद्धोधार्मिकोभवेत् ॥ शशांकात्कर्मगेभूपोमंत्रीवासुरमंत्रिणि ॥ ६४ ॥ सिद्धारंभः सुललितःसुभगोनृपपूजितः ॥ वित्तवाञ्जायतेचंद्राद्भार्गवेकर्मसंस्थिते ॥ ६५ ॥ व्याधितोदुःखितोनिःस्वोनित्योद्विग्नश्चकर्मसु॥ प्रज्ञाहीनोनरश्चंद्रात्कर्मभावस्थितेशनौ ॥ ६६ ॥ अथरवियोगाः ॥ सूर्य्याचंद्रादयो व्योम्निहिंस्रःक्षुद्रः कुकर्मकृत् ॥ कामरुक्शोकबहुलोभवेद्रक्षणकर्मकृत् ॥ ६७॥ अथचंद्राद्द्विग्रहयोगाः ॥ अलंकरणवस्त्रादिदिव्यवाणिज्यकोनरः॥शूरस्तीक्ष्णोऽतिहिंस्रश्चविधोर्व्यादित्यभौमयोः ॥ ६८ ॥ यस्त्रवाहनभूपादिभोक्तावाणिज्यकर्मकृत् ॥ जलजीवीभवेच्चंद्रात्कर्मण्यादित्यसौम्ययोः ॥ ६९ ॥ वीरःशूरः

पुमान्ख्यातोनृपमान्यश्चजायते ॥ सिद्धारंभोविधोर्व्योम्निसंस्थयोर-विजीवयोः ॥७०॥ स्त्रीसंश्रयः समृद्धश्चसुभगोनृपवल्लभः ॥ सशुक्रे भास्करेचंद्रात्कर्मगेस्वजनाश्रितः ॥ ७१ ॥ भृतकः कृपणोदीनोवधबंधनभाग्भवेत् ॥ प्रवासीचोरमुख्यश्चचंद्राद्व्योम्न्यर्कमंदयोः ॥ ७२ ॥ अथभौमादिद्विग्रहयोगाः ॥ भूभृतोरिर्महाशूरः शशांकाद्भौमसौम्ययोः ॥ भवेद्वसुकलादक्षः सजीवीकर्मसंस्थयोः ॥ ७३ ॥ मित्रेभ्योलब्धविभवः स्यात्तदाश्रयजीवितः ॥ बलिनोश्चेद्भवेच्चंद्राद्व्योम्निभूसुतजीवयोः ॥ ७४ ॥ विदेशगोवणिग्वृत्त्याहेममुक्तादिभिर्युतः ॥ जीवतिक्व्याश्रयोचेंदोर्व्योम्नि भूसुतशुक्रयोः ॥ ७५ ॥ साहसीजायतेमर्त्योकर्मयुक्तोऽनृतोर्जितः ॥ चंद्रात्कर्मस्थयोर्भौममंदयोर्जायतेनरः ॥ ७६ ॥ अथबुधादियोगाः ॥ धर्मिष्ठोनायकःख्यातोनृपपूज्योधनान्वितः॥ लिपिविच्छास्त्रसूत्रज्ञश्चंद्राद्व्योम्निबुधेज्ययोः ॥ ७७ ॥ मित्रार्थवनितासौख्यभाक्सुधीः सचिवोभवेत् ॥ देशाधीशोथवाचंद्रात्खमध्ये बुधशुक्रयोः ॥ ७८ ॥ मृद्भांडकृन्नरोलेख्यलिपिकृच्चप्रजायते ॥ विद्याचार्य्योतिविख्यातश्चंद्राद्व्योम्निज्ञमंदयोः ॥७९॥ अथगुर्वादियोगाः ॥ नृपभृत्योद्विजपतिः समर्थःशोकवर्जितः ॥ विद्याचार्य्योभवेच्चंद्राद्व्योम्निदेवेज्यशुक्रयोः ॥८०॥ परोपतापकृन्नीचसिद्धारंभःप्रजायते ॥ प्रसिद्धचेष्टितश्चंद्राद्दशमेजीवमंदयोः॥८१॥ तैलीसुवर्णकारश्चनाट्यंचित्रकरोभवेत् ॥ गंधोपजीविकश्चंद्राद्दशमे जीवशुक्रयोः ॥८२॥ अथचंद्रात्त्रिग्रहयोगाः सारावल्याम् ॥ रविभौमचंद्रपुत्राश्चंद्राद्दशमस्थिता नरंधन्यम् ॥ जलयंत्रसुनम-

पुरुषंनृपतिजनपूज्यंसर्वजनपूज्यम् ॥ ८३ ॥ रविभौमदेवपूज्या
दशमस्थानोपगानरंसुभगम् ॥ शत्रूणांजेतारंजनयंतिसमृद्धिसंयुक्तम्
॥ ८४ ॥ चंद्रादशमेभास्करभूसुतभृगुनंदनाश्चजनयंति ॥ क्रूरं
साहसनिरतंपरस्वापहारिणंचैव॥८५॥रविभूसुतरविपुत्रादशमस्थाः
क्रूरकर्मनिरतंच ॥ उत्पादयंतिमनुजंनिगुडपापंदुराचारम् ॥८६॥
रविबुधगुरवोदशमेविद्वांसंरूपसंयुतंसुभगम् ॥ उत्पादयंतिपुरुषंध-
र्मिष्ठंवंद्यंभंचैव॥८७॥रविशशिसुतभृगुपुत्रा यशस्विनंधार्मिकंविग-
तरोषम्॥जनयंत्यपराभूतंसौभाग्यपरिच्छदंसमृद्धंच॥८८॥रविबु-
धशनयोदशमेक्रूरंचपलंनरंविशीलंच॥ उत्पादयंतिनियतंशस्त्राभिप-
रिक्षतांगंच ॥ ८९ ॥ रविसुरगुरुभृगुपुत्रा दशमस्थानोपगानरंकु-
र्युः ॥ सुभगंविद्याधनधर्मरतिभोगभागिनंनित्यम् ॥ ९० ॥
रविसुरगुरुरविपुत्रादशमस्थानोपगा नरंकुर्युः॥रोमान्वितमतिचप-
लंसमस्तजनविप्रयुक्तंच ॥ ९१ ॥ अथभौमादियोगाः ॥ भौमें-
दुजसुरपूज्या धर्मिष्ठान्बहुकुटुंबपरिवारान् ॥ जनयंतिदशमसंस्था
विविधधनभाजनान्पुरुषान् ॥ ९२ ॥ शोभनशिल्पाभिरतान्
मालाकारान्सुवर्णकारांश्च ॥ कुर्युःकुजबुधशुक्रा दशमस्थाःसर्व-
लोकहानिरतान् ॥ ९३ ॥ भौमबुधसूर्यपुत्राजनयंतिनरान्धर्मशी-
लांश्च॥ निद्रानिरतान्सरलान्दशमस्थानोपगास्सुसत्यांश्च ॥ ९४ ॥
भौमसुरमंत्रिशुक्राश्चंद्राद्दशमाश्रिता नरंकुर्युः ॥ धनसंयुक्तं
सनयंदेवद्विजजनानुरक्तंच ॥ ९५ ॥ भौमभृगुभानुपुत्रा दशमस्था-
नोपगा नरंमलिनम् ॥ उत्पादयंत्यसत्यंवधबंधविवादनिरतंच ॥
॥ ९६ ॥ अथबुधादियोगाः ॥ बुधगुरुशुक्रादशमेजनयंतिसदेष्ट-

संयुतंपुरुषम् ॥ धनिनमतिसौख्ययुक्तंधर्मज्ञंसात्विकंधीरम् ॥ ९७ ॥ बुधदेवपूज्यशनयोजनयंतिनरंसदादशमसंस्थाः ॥ धनधर्मयुक्तमज्ञंद-यान्वितंसत्यनिष्ठंच ॥ ९८ ॥ अथगुर्व्वादियोगाः ॥ सुरगुरुभा-र्गवशनयोजनयंतिनरंत्वनेककर्मरतम् ॥ दशमेविज्ञानयुतंसुजनंपर-देशनिरतंच ॥ ९९ ॥ अथचंद्राद्दशमस्थैस्तुर्य्यग्रहैःफलम् ॥ प्रदीप्तांगोनरः क्रूरोदातासकलकर्मकृत् ॥ रविभौमज्ञदेवेज्यैश्चंद्रा-द्दशमगैर्भवेत् ॥ १०० ॥ मालाकारोलेख्यचित्ररतःकर्मरतस्त-था ॥ चंद्राद्दशमगैः सूर्य्यभौमचंद्रजभार्गवैः ॥ १ ॥ चंद्राद्दशमगैः सूर्य्यभौमचंद्रात्मजार्किभिः ॥ जायतेपुरुषोनीचरतोधर्मसमन्वितः ॥ २ ॥ कृषिकृद्धर्मशीलश्चबहुधान्यधनान्वितः ॥ सदोद्यमीभवेच्चं-द्रात्सूर्य्यारेज्यसितैःखगैः ॥ ३ ॥ परस्वहरणेसक्तः क्रूरकर्मरतोभ-वेत् ॥ अर्कारजीवशनिभिश्चन्द्राद्दशमसंस्थितैः ॥ ४ ॥ शक्का-चारोप्रकाश्यश्चजायतेनिपुणोनरः ॥ चंद्राद्दशमगैः सूर्य्यभौमास्फुजि-दिनात्मजैः ॥ ५ ॥ वाचकोमधुरोमल्लवृत्तिकर्षणरुन्नरः ॥ चंद्राद्दशम-गैः सूर्य्यबुधेज्यभृगुजैर्भवेत् ॥ ६ ॥ परेषांवचनासक्तोमेधावीक्रू-रचेष्टितः ॥ रविसौम्येज्यरविजैश्चंद्राद्दशसंस्थितैः ॥ ७ ॥ कर्षणा-नुरतंदक्षंवाग्मिनंकठिनंनरम् ॥ चंद्राद्दशमगैः सूर्य्यबुधभार्गवभानुजैः ॥ ८ ॥ रविजीवास्फुजिन्मंदैश्चंद्रान्मेपूरणस्थितैः ॥ प्रवाससक्तो मनुजोभवेद्विविधचेष्टितः ॥ ९ ॥ अथभौमादयः ४ ॥ प्रधृष्यसम-रेशूरः पंडितोनिपुणोभवेत् ॥ चंद्रात्कर्मस्थितैर्भौमबुधदेवेज्यभा-र्गवैः ॥ १० ॥ वैरिहाकठिनः शूरःसदोद्युक्तश्चसंगरे ॥ चंद्रात्कर्मस्थितै-र्भौमबुधदेवेज्यभानुजैः ॥ १११ ॥ सुविद्वान्बहुलःशूरो

पुरुषंनृपतिजनपूज्यंसर्वजनपूज्यम् ॥ ८३ ॥ रविभौमदेवपूज्या दशमस्थानोपगानरंसुभगम् ॥ शत्रूणांजेतारंजनयंतिसमृद्धिसंयुक्तम् ॥ ८४ ॥ चंद्राद्दशमेभास्करभूसुतभृगुनंदनाश्चजनयंति ॥ क्रूरं साहसनिरतंपरस्वापहारिणंचैव॥८५॥रविभूसुतरविपुत्रादशमस्थाः क्रूरकर्मनिरतंच ॥ उत्पादयंतिमनुजंनिगूढपापंदुराचारम् ॥८६॥ रविबुधगुरवोदशमेविद्वांसंरूपसंयुतंसुभगम् ॥ उत्पादयंतिपुरुषंध- र्मिष्ठंवल्लभंचैव॥८७॥रविशशिसुतभृगुपुत्रा यशस्विनंधार्मिकंविगः तरोपम्॥जनयंत्यपराभूतंसौभाग्यपरिच्छदंसमृद्धंच॥८८॥रविबु- धशनयोदशमेक्रूरंचपलंनरंविशीलंच॥ उत्पादयंतिनियतंशास्त्राभिप- रिक्षतांगंच ॥ ८९ ॥ रविसुरगुरुभृगुपुत्रा दशमस्थानोपगानरंकुः र्युः ॥ सुभंगंविद्याधनंधर्मरतिभोगभागिनंनित्यम् ॥ ९० ॥ रविसुरगुरुरविपुत्रादशमस्थानोपगा नरंकुर्युः॥रोमान्वितमतिचप- लंसमस्तजनविप्रयुक्तंच ॥ ९१ ॥ अथभौमादियोगाः ॥ भौमें- दुजसुरपूज्या धर्मिष्ठान्बहुकुटुंबपरिवारान् ॥ जनयंतिदशमसंस्था विविधधनभाजनान्पुरुषान् ॥ ९२ ॥ शोभनशिल्पाभिरतान् मालाकारान्सुवर्णकारांश्च ॥ कुर्युःकुजबुधशुक्रा दशमस्थाःसर्व- लोकहानिरतान् ॥ ९३ ॥ भौमबुधसूर्यपुत्राजनयंतिनरान्धर्मशी- लांश्च॥ निद्रानिरतान्सरलान्दशमस्थानोपगास्तुसत्यांश्च ॥ ९४ ॥ भौमसुरमंत्रिशुक्राश्चंद्राद्दशमाश्रिता नरंकुर्युः ॥ धनसंयुक्तं सनयंदेवद्विजजनानुरक्तंच ॥ ९५ ॥ भौमभृगुभानुपुत्रा दशमस्था- नोपगा नरंमलिनम् ॥ उत्पादयंत्यसत्यंवधबंधविवादनिरतंच ॥ ॥ ९६ ॥ अथबुधादियोगाः ॥ बुधगुरुशुक्रादशमेजनयंतिसंदेष्ट-

संयुतंपुरुषम् ॥ धनिनमतिसौख्ययुक्तंधर्मज्ञंसात्त्विकंधीरम् ॥ ९७ ॥ बुधदेवपूज्यशनयोजनयंतिनरंसदादशमसंस्थाः ॥ धनधर्मयुक्तप्रज्ञंदयान्वितंसत्यनिष्ठंच ॥ ९८ ॥ अथगुर्वादियोगाः ॥ सुरगुरुभार्गवशनयोजनयंतिनरंत्वनेककर्मरतम् ॥ दशमेविज्ञानयुतंसुजनंपरदेशनिरतंच ॥ ९९ ॥ अथचंद्राद्दशमस्थैस्तुर्य्यग्रहैःफलम् ॥ मदीनांगोनरः क्रूरोदातासकलकर्मकृत् ॥ रविभौमज्ञदेवेज्यैश्चंद्राद्दशमगैर्भवेत् ॥ १०० ॥ मालाकारोलेख्यचित्ररतःकर्मरतस्तथा ॥ चंद्राद्दशमगैः सूर्य्यभौमचंद्रजभार्गवैः ॥ १ ॥ चंद्राद्दशमगैः सूर्य्यभौमचंद्रात्मजार्किभिः ॥ जायतेपुरुषोनीचरतोधर्मसमन्वितः ॥२॥ कृषिकृद्धर्मशीलश्चबहुधान्यधनान्वितः ॥ सदोद्यमीभवेच्चंद्रात्सूर्य्यारेज्यसितैःखगैः ॥ ३ ॥ परस्वहरणेसक्तः क्रूरकर्मरतोभवेत् ॥ अर्कारजीवशनिभिश्चन्द्राद्दशमसंस्थितैः ॥ ४ ॥ शस्त्राचारोमकाश्यश्चजायतेनिपुणोनरः॥ चंद्राद्दशमगैः सूर्य्यभौमास्फुजिदिनात्मजैः॥५॥ याचकोमधुरोमल्लवृत्तिकर्षणकृन्नरः ॥ चंद्राद्दशमगैः सूर्य्यबुधेज्यभृगुजैर्भवेत् ॥ ६ ॥ परेषांवचनासक्तोमेधावीक्रूरचेष्टितः ॥ रविसौम्येज्यरविजैश्चंद्राद्दशसंस्थितैः ॥ ७॥ कर्षणानुरतंदक्षंवाग्मिनंकठिनंनरम्॥चंद्राद्दशमगैः सूर्य्यबुधभार्गवभानुजैः ॥ ८ ॥ रविजीवास्फुजिन्मंदैश्चंद्रान्मेपूरणस्थितैः ॥ प्रवाससक्तोमनुजोभवेद्विविधचेष्टितः॥९॥ अथभौमादयः ४ ॥ प्रधृष्यसमरेशूरः पंडितोनिपुणोभवेत् ॥ चंद्रात्कर्मस्थितैर्भौमबुधदेवेज्यभार्गवैः॥ १० ।।वैरिहाकठिनः शूरःसदोद्युक्तश्चसंगरे॥ चंद्रात्कर्मस्थितैर्भौमबुधदेवेज्यभानुजैः ॥ ११ ॥ सुविद्वान्बहुलःशूरो

विनाशंगोनरोभवेत् ॥ चंद्रात्कर्मस्थितैर्भौमबुधशुक्रशनैश्चरैः ॥ १२ ॥ धीरोधनसमृद्धश्चपुमान्बहुकुटुंबभाक् ॥ इंदोर्दशमगैर्भौमजीवशुक्रयमैर्नरः ॥ १३ ॥ मेधावीलोकविदितः शांतात्मापुरुषोभवेत् ॥ कर्मसंस्थैर्विधोः सौम्यजीवभार्गवसूनुजैः ॥१४॥ इमेयोगाः प्रशस्यंतेसौम्यग्रहनिरीक्षिताः ॥ अभद्राःस्वपराः मोक्ताःपापग्रहनिरीक्षिताः ॥ १५ ॥ नृपाःपुरोहिताःग्रामगणकाश्चकानराः॥जायंतेकर्मगैः पापैःसौम्यग्रहनिरीक्षितैः॥ ॥ १६ ॥ अथधिष्ण्यानिहिल्लाजेनोक्तानि ॥ एकोनविंशतिर्विधोगमिशंचरस्य १० अंगिरिषेद ४३ धनकृताश्रिनिजोग २७ वर्षे ॥ अग्रात्रयंविदिहिगोकु १९ गरुदनंचनीयोर्क १२ के धनमधोगृगुनीयसौम्यम् ॥ १७ ॥ इत्यवधिः॥ अथकर्मभावेराशिफलम ॥ कर्मस्थितेमुख्यतमेचराशौकरोतिकामानयशःसुखम् ॥ पशुन्वस्त्रंविनयानिरिक्तंसुनिंदितंसाधुजनस्यलोके ॥ १८ ॥ नृपंचरस्थेनकरोतिकर्मण्यपात्मकंसाधुजनानुतापम् ॥ द्विजेंद्रदेवानिधिभिर्विभिः काम्यान्मकंनीतिकरंमनांच ॥ १९ ॥ नृमेपरंस्थेनकरोतिमन्यः कर्मनपानंगुणिभिः प्रविद्वम् ॥ कीर्त्यंन्वितंनीतिकरांश्चनानाभागनेत्रंदप्रिपंगमंदप ॥ २० ॥ कर्केदरस्थेनक-

त्मकंनियतमंनृलोके ॥ २३ ॥ तुलाधरेव्योमगतेमनुष्योवाणिज्यकर्मप्रचुरंकरोति ॥ धर्मात्मकंचापिनयेनयुक्तंसतामभीष्टंपरसंमतं च ॥ २४ ॥ कीटेंबरस्थेप्रकरोतिकर्मपुमान्सुदुष्टंजननिंदितंच ॥ व्यथाकरंदेवगुरुद्विजानांसनिर्दयंनीतिविवर्जितं च ॥ २५ ॥ चापेंऽबरस्थेप्रकरोतिकर्मसेवात्मकंचौर्य्ययुतंमनुष्यः ॥ परोपकारात्मकभोजनार्थंनृपात्मकंभूरियशःसमेतम् ॥ २६ ॥ मृगेंबरस्थेचपरोपतापीकर्मप्रधानंकुरुतेमनुष्यः ॥ सुनिर्दयंबंधुवधैः समेतंधर्मेण हीनंखलसंमतं च ॥ २७ ॥ घटेंबरस्थेचकरोतिमर्त्यः कुलोचितंकर्मगुरुप्रदिष्टम् ॥ कीर्त्यात्मकंसुस्थिरमादरेणनानाद्विजाराधनसम्मतं च ॥ २८ ॥ मीनेंबरस्थेप्रकरोतिकर्मप्रायेणमर्त्यः परवंचनोत्थम् ॥ पाखंडधर्मान्वितमिष्टलोभाद्विश्वासहीनंजनताविरुद्धम् ॥ २९ ॥ अथकर्मेशभावफलम् ॥ गगनपतौलग्नगतेमातरिवैरीपितरिभवतिभक्तः ॥ दुःखीगतोपिबाल्येपरपुरुपरताभवतिमाता ॥ ३० ॥ वित्तस्थेगगनपतौमात्रापालितसुतोभवति ॥ लोभीमातरिदुष्टोस्वल्पग्रासःसुतनुकर्मा ॥ ३१ ॥ मातरिस्वजनविरोधीसेवाभिरतोनकर्मणिसमर्थः॥ मातुलपरिपालितःस्याद्दशमपतौसहजभावगते॥ ३२॥दशमेपेबुगतेनिरतःसुसेवितरिमातरिपोपणपूजने ॥ सकललोकदयामृतायतेनृपतिसंभवलाभविभूपितः ॥ ३३॥ शुभकर्मकोविदंचीनृपलाभीगीतवाद्यनिरतःस्यात् ॥ गगनपतौलनयगतेपालयतिचतत्सुतंमाता ॥ ३४ ॥ अंबरपेरिपुसंस्थेक्रूरेवाल्येतिकष्टभाग्भवति ॥ पुरुपःपश्चादीशःपरपुरुपरतातथामाता ॥ ॥ ३५ ॥ सुतवतीशुभरूपसमन्वितारमणमातरिपालनलालसा ॥

भवतितस्यनरस्यनिरंतरंप्रियतमांबरपेदयिवागते॥ ३६ ॥ पुष्करपतिरष्टमगःक्रूरथ्यैरंमृपान्वितंदुष्टम् ॥ मातारिसंतापकरंजनयतिलघुजीवितंकितवम् ॥ ३७ ॥ शुभशीलःसद्बंधुःसन्मित्रोदशमपेनवमलीने ॥ तन्मातापिसुशीलासुकृतवतीसत्यवचनरता ॥ ३८ ॥ गगनपतिर्गगनगतोजनयतिजननीसुखप्रदंपुरुषम्॥जननीकुलविपुलसुखंप्रकटघटीनांपटीयांसम् ॥ ३९ ॥ मानोर्जितभर्तृजननीतथा चसुतरक्षिणीभवेत्सुखिनी ॥ दीर्घायुर्मातृसुखःपुरुषोलाभाश्रितोंबरपे॥४०॥मानोज्झितोनिजबलःशुभकर्मानृपतिकर्मरतिचेताः। व्योमपतोप्ययसंस्थेदेशभ्रमणश्चपापखगे॥४१॥ इत्येवंकर्मभावविचारः ॥१०॥ अथलाभभावः॥ तत्रार्किंविचार्यमित्युक्तं जातकाभरणे ॥ गजाश्वहेमांबररत्नजातमांदोलिकामंगलमंडलानि।लाभःकिलैपामखिलंविचार्यमेतत्तुलाभस्यगृहेग्रहज्ञैः॥१॥होराप्रदीपे॥स्वस्वामिसद्ग्रहयुतेक्षितलाभगेहेसद्वर्गकेभवतियरतुविशेपलाभः ॥ क्रूरैस्तुदुष्टसहितेनचतत्रलाभस्तद्वर्गगेप्यथचमिश्रफलंचमिश्रे॥२॥अन्यत्॥यथाग्रहैः पंचमगैःफलंतथाऽऽयनायकेसद्बलिनिश्चयंशुभम् ॥ ग्रहैःसमस्तैररिनीचदुर्भगेतरैःश्रियोनंतसुखावहानृणाम् ॥३॥ लाभेकुजार्क्यगुयुतेगजवाजिराजिः शय्यासुखं विधुसुतेभृगुजे नृयानम् ॥ चंद्रेज्ययोः स्ववनितासुखमिष्टविद्याज्ञेब्जे सितेन्नतनयातनयः सुरेज्ये ॥ ४ ॥ सर्वे भावाः सन्तआयेधिवीर्ये ज्ञेस्यांचंद्रे कूपयज्ञादिसिद्धिः ॥ चेदर्कारौस्त्रीग्रहैर्ज्ञेनचाढ्यो वह्वयोजीवंत्यस्य पुत्र्यो नपुत्राः ॥ ५ ॥ राहुःशनिश्च यदिदारुशिलाहतिस्तत्रांगेखले क्षणवशाच्छुनकादिभीतिः ॥ राहाविहास्थ-

सुतः स्थविरे यदि स्याज्जीवेच्छनावपिचसन्धिगतेऽप्रजाःस्यात्॥
॥ ६ ॥ वामलग्नभुजपादजथ्ययोलग्नजंघइहवाकुजार्कयोः ॥ चे-
द्द्वावधिवेलेस्ववर्गगेभूपचौरपशुभिर्धनाश्रयः ॥ ७ ॥ एवमत्रसक-
लैर्ग्रहैः फलंस्वस्ववर्गचलयुग्भिरायगैः ॥ स्वस्वभाववशतःपुरोक्त-
वत्तारतम्यमुदितंपुरातनैः ॥८॥ आयस्थानेसद्ग्रहैर्दृष्टयुक्तेसत्खेटानां
वर्गगेऽनल्पलाभः॥ स्याच्चेदेकोपिस्वषड्वर्गशुद्धःसर्वैर्दृष्टस्तत्रजातोनृपः
स्यात् ॥ ९ ॥ अथसामान्यविचारेणलाभस्थरव्यादीनांफलं
गर्गमतेन ॥ धनधान्यहिरण्याद्यैरूपवांश्चकलान्वितः ॥ लाभगेहे
रवौज्ञानीविनीतोगीतकोविदः ॥ १० ॥ विख्यातोगुणवान्प्राज्ञोभो-
गलक्ष्मीसमन्वितः॥ लाभस्थानगतेचंद्रेगौरोमानववत्सलः ॥ ११ ॥
प्रभूतधनवान्मानीसत्यवादीदृढव्रतः॥अश्वाढ्योगीतसंयुक्तोलाभस्थे
भूमिनंदने ॥ १२ ॥ विधेयप्रियवाक्शूरोधनधान्यसमन्वितः॥लाभे
कुजेमृतोमानीहतचित्तोग्नितस्करैः ॥ १३ ॥ स्त्रीवल्लभोतिगुणवान्
मतिमान्स्वजनप्रियः ॥ लाभगेसोमतनयेमंदाग्निःसमपद्यते॥ १४ ॥
नीरोगीदृढवीर्य्यश्चमंत्रवित्परशास्त्रवित् ॥ ज्ञातिविद्याल्पतनयःसा-
धुरेकादशेगुरौ ॥ १५ ॥ स्त्रीरत्नवररत्नाढ्योस्वस्थःशोकविव-
र्जितः ॥ संपन्नधनभृत्यश्चमर्त्योलाभगतेसिते ॥ १६ ॥ स्थिरसं-
पत्तिभूलाभीशूरःशिल्पान्वितःसुखी ॥ निर्लोभश्चशनैश्चिस्मृ-
तःप्रथमजीवकः ॥ १७ ॥ यस्यलाभगतोराहुर्लाभोभवतिनिश्च-
यात् ॥ म्लेच्छादिपतितैर्नूनंगजवाजिरथादिकम् ॥ १८ ॥
अथविशेषविचारेणरव्यादिफलम्॥ लाभेरवौक्षितयुतेरविवर्ग-
युक्तेचौर्य्याचतुष्पदमुखैर्नृपतेर्हिलाभः ॥ तद्वद्विधौयुवतितोथगजा-

दिविनंक्षीणेक्षयोभवतिपूर्णविधौचवृद्धिः ॥ १९ ॥ आयेकुजेक्षि-
तयुतेस्यगणेतुकष्टंवित्तंसुवर्णमणिपावकशस्त्रजातम् ॥ ज्ञोदीक्षि-
तेज्यगुणआयगृहेधनंस्याच्छिल्पादिकाव्यलिखनैस्तुरगैः सकांस्यैः
॥ २० ॥ जीवेक्षितेचगुरुवर्गयुतायगेहेयज्ञादिहेमहयनागगवादिमु-
ख्यैः॥ शुक्रेक्षितेथयुतवर्गयुतायभेस्त्रीवेश्यांगनागमजरत्नसुरोप्यवि-
त्तम् ॥ २१ ॥ मंदेक्षितेथशनिवर्गयुतेमहिष्यालोहादिकैः कृषि-
बलैश्चवरायुधैश्च ॥ २२ ॥ नीचारिभागभगतोत्रफलंनदद्या-
द्दूरिग्रहोद्भवभवेत्फलवीर्य्यवंतः ॥ २३ ॥ अथबालाद्यवस्थासु
कुत्रस्थाग्रहाःफलदास्तदाह ॥ उदयात्पंचमभंयावज्जन्मपत्र्यां
शुभग्रहाः ॥ वयसिप्रथमेसौख्यंप्रकुर्वाच्यंनवंनवम् ॥२४ ॥ पंच-
मान्नवमंयावत्तत्रसंस्थैःशुभग्रहैः॥ वृद्धित्वेपिहिसंप्राप्तेसर्वसौख्यंप्रवं-
र्तते ॥ २५ ॥ नवमाद्व्ययभंयावत्स्थितैः सर्वशुभग्रहैः॥वृद्धत्वेऽ-
पिहिसंप्राप्तेसर्वसौख्यंप्रवर्तते ॥ २६ ॥ यस्मिन्वयसितुंगाश्चमुदि-
ताः स्वगृहेस्थिताः ॥ तत्रराज्यसुखंलक्ष्मीस्तेजोभवतिनिश्चितम्
॥ २७ ॥ यस्मिन्वयसिमंदाश्चेत्क्रूरदृष्टविरास्मिकाः ॥ तत्रहानिं
रुजांविंद्यात्पदभ्रंशःखलागमः ॥ २८ ॥ यादृग्वर्णोभवेल्लाभेतद्वर्ण-
समवस्तुनः॥लाभोभवतितद्वर्णैर्नरैर्मैत्रैर्धनंसुखम्॥२९॥ भानुभानु-
जभौमैश्चयुक्तोलाभोयदाभवेत् ॥ तदासंतानजंदुःखंजायतेनात्र
संशयः ॥ ३० ॥ चंद्रचांद्रिसमायोगात्कन्यास्यात्सुखदायिनी ॥
जीवशुक्रसमायोगेपुत्रःस्यात्सुखकारकः ॥३१॥ कन्यापत्यंमृता
पत्यंपुत्रनाशोऽनपत्यंता ॥ ग्रहभावविचारेणवक्तव्यंतत्र निश्च-
यात् ॥ ३२ ॥ अथराशिफलम् ॥ लाभाश्रितेमुख्यतमेचरा-

शौचतुष्पदेभ्यः प्रकरोतिलाभम् ॥ तथानराणांनृपसेवनाद्वदे-
शांतराराधनतस्तथैव ॥ ३३ ॥ आयस्थितेवैवृषभेत्रलाभोभवेन्म-
नुष्यस्ययथेष्टजातः ॥ स्त्रीणांसकाशादथसज्जनानांकृपीवलाद्वापि-
भवेचलाभः ॥ ३४ ॥ तृतीयराशौकुरुतेत्रलाभंलाभाश्रितेस्त्रीद-
यितासकाशात् ॥ वस्त्रार्थमुख्यासनयानमानात्सदानराणांविविधैः
प्रकारैः ॥ ३५ ॥ लाभोभवेल्लाभगतेचराशौसदाचतुर्थेबरभांडजा-
तः ॥ वणिक्कृपिभ्यांजनताप्रभूतः शास्त्रेणवासाधुजनस्यसं-
गात् ॥ ३६ ॥ लाभाश्रितेपंचममेवलाभोभवेन्मनुष्यस्यनिगर्हणा-
भिः ॥ नानाजनानांवधबंधनैश्चव्यायामदेशांतरसंश्रयाच ॥ ३७ ॥
कन्यात्मकेलाभगतेमनुष्योप्राप्नोतिलाभंविविधैरुपायैः ॥ शास्त्रा-
गमाभ्यांविनयेनसाधुशुद्धंविवेकेनतथाद्भुतेन ॥ ३८ ॥ तुलाधरेला-
भगतेमनुष्यः प्राप्नोतिलाभंवनजैर्विचित्रैः ॥ सुसाधयेद्वाविनयेन
नित्यंसुसंस्थितंमुख्यतमंप्रभूतम् ॥ ३९ ॥ लाभाश्रितेचाष्टमकेच
राशौप्राप्नोतिलाभंमनुजोतिनित्यम् ॥ छलेनपापेनच वंचनैश्चपरस्य
पैशुन्यकृतैर्विचारैः ॥ ४० ॥ लाभाश्रितेचैवधनुर्धरेचनृपार्थला-
भंभजतेमनुष्यः ॥ सुसेवयाशस्त्रकृतैरुपायैः पुष्पांबराराधनतोर्थला-
भः ॥ ४१ ॥ लाभाश्रितेचेन्मकरोर्थलाभोभवेन्नराणांजलपान-
योगात्॥विदेशवासान्नृपसेवनाद्वा व्ययात्मकंभूरितरंसदैव॥४२॥
आयस्थितेकुंभधरेहिराशौ लाभोमनुष्यस्यकुकर्मसंगात् ॥
न्यायेनधर्मेणपराक्रमेण विद्याप्रभावात्सुसमागमेन ॥ ४३ ॥
लाभाश्रितेचांत्यतमेचराशौप्राप्नोतिलाभंविविधंमनुष्यः॥ मित्रोद्भवं
पार्थिवमानजातं विचित्रवाक्यप्रणयेननित्यम् ॥४४॥ अथलाभे-

शुभावफलम् ॥ अल्पायुर्बहुकलितः शूरोदाताजनप्रियःसुभगः ॥ लाभपतौलग्नगतेतृष्णादोषान्मृतिंलभते ॥ ४५ ॥ वित्तगतेलाभपतावुत्पन्नभुगल्पभाजनोल्पायुः ॥ अष्टकपालीचौरःक्रूरेसौम्येच धनकलितः ॥ ४६ ॥ बंधुश्रीपालनकः सुबांधवोबंधुवत्सलस्तु शुभे. ॥ लाभेशेसहजगते बंधूनांशत्रुवत्क्षेता ॥४७॥ तुर्यस्थेलाभेशेदीर्घायुः पितरिभक्तिभाग्भवति ॥ समवायिकारणरतः सुकर्मतोलभवान्मनुजः ॥ ४८ ॥ तनयगतोलाभपतिः पितृपुत्रौ स्नेहलौमिथः कुरुते ॥ तुल्यगुणौचपरस्परतृष्णाजीवीचिभवतिसुतः ॥ ४९ ॥ लाभाधिपेषष्ठगतेसुवैरंसुदीर्घरोगंचतुरंगसंग्रहम् ॥ मृतिंसमाप्नोतिचचौरहस्तात्क्रूरेचदेशांतरसंगतोनरः ॥ ॥ ५० ॥ सप्तमगेलाभेशेतेजस्वीशीलसंपदःपदवी॥दीर्घायुर्भवति नरस्तथैकदयितापतिर्नियतम् ॥ ५१ ॥ एकादशपेष्टमगेक्रूरेल्पायुः सुदीर्घरोगीवा ॥ जीवनमृतश्चदुःखीरोगीनचसौम्यगगनचरैः ॥ ॥५२॥ एकादशेशेसुकथाश्रयस्थेबहुश्रुतःशास्त्रविशारदःस्यात्॥ धर्मप्रसिद्धोगुरुदेवभक्तः क्रूरेचबंधुव्रतवर्जितःस्यात्॥५३॥ मातरि भक्तःसुकृतीपितरिद्वेषीसुदीर्घतरजीवी ॥ धनवान्जननीपालननिरतोलाभाधिपेख १० गते ॥५४॥ लाभाधिपोलाभगतः करोतिदीर्घायुषंपुष्कलपुत्रयुक्तम् ॥ सकर्मकंरूपयुतंसुशीलंजनप्रमोदप्रचणं पुमांसम् ॥ ५५ ॥ द्वादशगेलाभेशेउत्पन्नभुगस्थिरोभवतिभोगी॥ उत्पातरतोमानीदांतोदुःखीसदापुरुषः ॥ ५६॥ अन्यच्च ॥लाभेशोयदिसमवाप्तिगेहयातोवाग्मीस्यात्पुरुषवरःसुखीसमृद्धः ॥ पाण्डित्यंसकलविधंचसत्कवित्वंसत्कीर्त्यैप्रतिदिनमस्यवृद्धिमेति १ ॥

॥ ५७ ॥ रिःफस्थोयदिसमवाप्निगेहनाथः संसर्गोयवनजनैस्तदा सदास्यात् ॥ कान्ताभीरमणपरः स्मरोत्थभावैः कामार्त्तः क्षणधिषणोतिलंपटश्च २ ॥ ५८ ॥ लग्नस्थोयदिसमवाप्निभावनाथः स्याद्वक्ताधनसहितः कुतूहलात्मा ॥ सर्वत्राविषममतिः प्रसन्नचेता विख्यातः खलवियुतश्चसात्विकात्मा ३ ॥ ५९ ॥ लाभेशेसहजगतेऽथवित्तयातेतीर्थेपुप्रगुणधिया कृतार्थभूतः ॥ सत्कार्येष्वपि कुशलोतिलोलचित्तः स्वल्पस्वोऽनवरतशूलरोगदुःखी ४ ॥ ६० ॥ लाभेशेसुखसुतभावगामिनिस्यान्नानार्थो बहुविधसौख्यभाङ्मनुष्यः ॥ धर्मात्माशुभपुमपत्यवीर्यसंपत्संयुक्तः शुफलसिद्धिभूषितश्च ५ ॥ ६१ ॥ लाभेशेरिपुभवनस्थिते नरोसौस्यादेहोविविधरुजार्दितः सदैव ॥ सार्वात्म्येनचसुखवानपिप्रवासी गच्छेदस्यतुपरसेवयैवकालः ६ ॥ ६२ ॥ लाभेशेमदगृहगेथरंध्रयाते नोजीवेदिहवनितानरस्यकापि ॥ कामार्त्तोधनसहितः प्रकृत्युदारः कौलीनेष्वनभिमतव्ययोऽप्रबुद्धः ७ ॥ ६३ ॥ लाभेशेनवमगतेथवांबरस्थेभूपालैरपिपरिपूजितांघ्रिपद्मः ॥ धर्मात्माकृतिकुशलश्चसत्यवादीविख्यातोधनसहितोऽपरोपकर्ता ८ ॥ ६४ ॥

अथलाभस्थरव्यादीनामवधिवर्षाणिहिल्लाजः ॥ लाभेरविर्जिन २४ समामितलाभमिंदौभूपाचलाभमसृजिर्जिन २४ वर्षलक्ष्मीम् ॥ ज्ञःपंचवेद ४५ धनमीज्यइनाब्द १२ लक्ष्मींशुक्रःकरोतिधनमार्किफलंकुजोक्तम् ॥ ६५ ॥ इतिलाभभावः ॥ ११ ॥

अथव्ययभावः ॥ तत्रांकविचार्य्यमित्युक्तंजातकाभरणे ॥ हार्निर्दानंव्ययश्चापिदंजोनिर्बंधएवच ॥ सर्वमेवव्ययस्थानाच्चिंतनीयंप्र-

यत्नतः॥१॥पादद्वयंस्थानमिदंव्ययाख्यंनिर्बंधदानोद्वहनव्ययादेः
जलाशयादेःसदसत्क्रियादेर्देहस्यहानेश्वविचार्यतात्र ॥ २ ॥ अथ
सामान्यविचारेणव्ययस्थरव्यादीनांफलंगर्गमतेन ॥ व्यय-
स्थानगतेसूर्येव्ययशीलोभवेन्नरः ॥ परस्त्रीव्यसनाढ्यश्चकुरुते
व्ययमद्भुतम् ॥ ३ ॥ व्ययेशशिनिकार्पण्यमविश्वासःपदेपदे ॥
कृष्णपक्षेविशेषेणकार्पण्यमभिवर्धते ॥ ४ ॥ कोपनोबहुकामाढ्यो
व्यंगोधर्मस्यदूषकः ॥ भूमिजेद्वादशस्थेतुविद्वेषोमित्रबंधुषु ॥ ५॥
नृपपीडनसंतप्तंपरवादेनपीडितम् ॥ नृशंसंपुरुषंचात्रिःकुरुतेव्यय-
राशिगः ॥६॥ उच्छ्रितव्ययकारीचरिःफगेदेवतागुरौ ॥ सेवावि-
ज्ञोमहाक्रोधीमालसोलोकविग्रही ॥ ७ ॥ श्रद्धाहीनोघृणाहीनःप-
रदाररतःसदा ॥ व्ययस्थानगतेशुक्रेरोगार्तःस्थूलदेहकः ॥ ८ ॥
नीचकर्माश्रितः पापोहीनांगोभोगलालसः ॥ व्ययस्थानगतेमंदेक्रू-
रेषुकुरुतेरुचिः ॥ ९ ॥ व्ययस्थानगतेराहौनीचकर्मरतःसदा ॥
असद्व्ययीपापबुद्धिःकपटीकुलदूषकः ॥ १० ॥ व्ययभावेस्वा-
मियुक्तेशुभदृष्टेचसद्व्ययी ॥ कीर्तिभाञ्जायते मर्त्योविपरीतेविपर्य-
यः॥११॥अथविशेषफलम्॥भानौव्ययेहरतिभूपतिरत्रद्रव्यंक्षी-
णेथवाशशिनिसद्व्ययकृच्छुभेस्यात्॥पुष्णंतिवित्तमिहसत्यचरास्तु
केचित्पूर्णंविधावपितथैवशुभैश्चदृष्टे ॥ १२ ॥ दृष्टेकुजेबुधेनैववित्त-
नाशोभवेद्ध्रुवम् ॥ पूर्वस्वक्षादिगैः खेटैस्तुच्छंनीचार्कगैः फलम्॥
॥ १३ ॥ अन्यत् ॥ व्ययेसूर्येराजपुत्रचौरेभ्योविगतंधनम् ॥
लकुटाघातस्तेपांहिचिह्नंचचरणेभवेत्॥१४॥ चंद्रेचजलकार्येच
विवाहेचधनव्ययम् ॥ कुटुंबैर्मातृभिर्वापिधनंभुक्तंनिगद्यते॥१५॥

शुक्रेजीवेव्यये ॥ वित्तंदानंदत्तंद्विजातये ॥ तीर्थदेवालयेदीनभिःशुक्रेपुण्ययंभवेत् ॥ १६ ॥ क्रूरक्षेत्रेक्रूरयुतेगतंचाऽसद्व्ययैर्धनम् ॥ जीविकार्थेधनंयस्मैदत्तंतेनार्पितंनतत् ॥ १७ ॥ अन्यत् ॥ व्ययालयेक्षीणबलः कलावान्सूर्योथवाद्वावपितत्रसंस्थौ ॥ द्रव्यंहरेद्भूमिपतिस्तुतस्य व्ययालयेवाकुजदृष्टयुक्ते ॥ १८ ॥ यादृशागगनगाव्ययस्थितास्तादृशंव्ययमिहाचरत्ययम् ॥ उष्णगौव्ययगतेयदर्जितंयातिभूपसदनेहितद्धनम् ॥ १९ ॥ कुजेऽम्बुजेशेचधनेव्ययेवासन्नौग्रहेऽन्नेत्रधनव्ययःस्यात् ॥ वेश्यानिपादैश्चसंगीतनृत्यैःसाकौतवैर्गोम्लेच्छविरोधिदुष्टैः ॥ २० ॥ कुजेव्ययेक्षत्रियवर्गतोव्ययः क्षतंचकट्यामपिदक्षवामयोः ॥ दृशिश्रुतौवामतनौ रुजास्त्रियोधिकांगतादुष्कृतितोव्रणादिभिः ॥ २१ ॥ यःमादिभिःसेंदुभिरंभसोव्ययोहुताशतोर्कारयुतैःपरस्त्रियाः ॥ सभार्गवैः सेंदुसुतैश्चशत्रुतोश्मदार्वयःशृंग्यनिलादिबाधनम् ॥ २२ ॥ पितृमातृसहोदरक्षयोरविसौरिक्षितिजाव्ययेयदा ॥ यदिविदितसत्सूरिसंगमः सुखिनः संतिसहोदरास्तयोः ॥ २३ ॥ व्ययेन्नदाताधिपणोथसेन्दुजेकृषिक्रियाकृत्ससितेमखादिकृत् ॥ तडागवाप्यादिकृदिन्दुसंयुतेव्ययेसशुक्रोहिरधिष्णादिकृत् ॥ २४ ॥ क्षीणेंदूरविरथवाप्ययेथवाद्वौचेत्तस्याखिलधनसंहृतिर्नृपात्स्यात् ॥ दुःस्थारेपिफलमिदंव्ययेथवित्तंसत्स्यात्सद्बुधसितजीवपूर्णचन्द्रैः ॥ २५॥ व्ययगेऽसृजिवियुतेक्षितेधननाशोथगुरुर्व्ययेयदा ॥ पटुगोधनहेमसम्पदोभृगुजेऽश्वाविदिशोभनामही ॥ २६ ॥ पूर्णेविधौव्ययगतेविपुलागृहाःस्युःस्वंसेवकेऽर्पयतिसज्जरवोसमर्स्तम् ॥ सेज्येसिते

व्ययगतेसधनीसुकर्मासाम्वे शिवे यदुपतौ चरतोनरः स्यात् ॥
॥ २७ ॥ सद्व्ययोगवर्तिकेंद्रगैः शुभैः पंचपूरुषशुभव्यवस्थया ॥
नारयोथबलिभिः खलैर्व्ययेऽप्यर्यपदोधिखलुसूतिपृच्छयोः ॥ २८॥
अन्यैश्चावधिर्हिल्लाजमतेनं ॥ अष्टाग्नि २८ केहानिमिनोव्य-
येऽब्जःपीडांत्रिके ३ क्षितिभवेक्षयुगे ४५ र्थहानिः ॥ सौम्योऽ-
र्थहानिरुदिने १२ गुरुरक्षयुग्मे २५ द्रव्यव्ययंभृगुसुतोऽर्के १२
मितेक्षिपीडा ॥ २९॥ अथव्ययभावेराशिफलम्॥ मेषेव्ययस्थे
प्रभवेन्नराणां व्ययंसदाच्छादनभोजनैश्च ॥ चक्षुष्प्रदानेकविवर्द्धनेन
लाभेननानाविधपौरुषेण ॥ ३० ॥ वृषेव्ययस्थेथतदेवपुंसांभवेद्वि-
चित्रांबरयोषितानाम् ॥ लाभेनरोषेणचविक्रमेणश्रुतानुचेष्टैर्विवि-
धैः प्रकारैः ॥ ३१ ॥ तृतीयराशौव्ययगेनराणांपापोभवेत्स्त्रीव्य-
सनात्मकश्च ॥ भूतोद्भवंवासुतसंप्रभूतःकुशीलतः पापजनाश्रयाच॥
॥ ३२॥ कर्केव्ययस्थेद्विजदेवतानांव्ययोभवेद्दैवतयज्ञतश्च ॥
धर्मक्रियाभिर्विविधाभिरेवसुसंस्थितः साधुजनैर्नृलोके ॥ ३३ ॥
सिंहेव्ययस्थेतुभवेन्नराणामसद्व्ययोभूरितरः सदैव॥ कुपात्रसंगाच्च
कुकर्मणाचनित्यः सतांपार्थिवचौरतोवा ॥ ३४ ॥ कन्याभिधेचां-
त्यगतेव्ययश्चभवेन्मनुष्यस्यहिचांगनोत्थः ॥विवाहमांगल्यमखैर्वि-
चित्रैःसत्रैः प्रभाभिर्बहुसाधुसंगात् ॥ ३५ ॥ तुलेव्ययस्थेसुरवि-
प्रबंधुश्रुतिस्मृतिव्यश्चकृतोव्ययश्च ॥ भवेन्नराणांनियमैर्यमैश्चसुती-
र्थसेवाजनितः प्रसिद्धः ॥ ३६ ॥ अलौव्ययस्थेचभवेद्व्ययस्तुपुं-
सांप्रमादेनविडंबनाभिः ॥ कुमित्रसेवाजनितःसुनित्यःकुबुद्धितश्चौ-
रंरुताद्विकारात् ॥ ३७ ॥ चापेव्ययस्थेपरवंचनाभिः [illegible]

वैस्त्यापजनप्रसंगात् ॥ सेवाकृतोवित्तधियाचपुंसांकृपिप्रसंगोत्पर-वंचनाद्वा ॥ ३८ ॥ मृगेव्ययस्थेचभवेन्नराणांव्ययस्तुपानासव-सत्यजातः ॥ स्ववर्गपूजाजनितोऽन्यतस्तथाकृषिक्रियाभिश्चधन-व्ययोप्यथं ॥ ३९ ॥ कुंभेव्ययस्थेसुरसिद्धिविप्रंतपस्विनोयं-दिशंवोव्ययश्च ॥ पुंसांभवेत्साधुजनावरोधाच्छास्त्रप्रसिद्धेः प्रथि-तश्चभूरि ॥ ४० ॥ मीनेव्ययस्थेजलयानतोवाकुसंगमा-द्वाप्रभवेद्व्ययश्च ॥ पुंसांतुपुत्रासनयानजातस्तथाविवादेननिरंत-रेण ॥ ४१ ॥ येज्ञानचिंतासुपुराप्रविष्टायोगा मयातत्परिहृत्यचै-ते॥योगाविचिंत्याःसुधियाततस्तुयाच्यानराणांहिशुभैः शुभास्ते ॥ ॥४२॥अथव्ययेशभावफलम् । वृद्धयवनः॥व्ययनाथेलग्नगते विदेशगः सुवचनः सुरूपश्च ॥ असंगवाददोपीभवतिकुमारोथवा खंजः ॥ ४३ ॥ द्वादशपेवित्तगतेकृपणः पटुवागनिष्टलाभलयः॥ भौमेतुगच्छतिधनंनृपतस्करवह्नितवभयतः ॥४४ ॥ सहजगतेद्वा-दशपेकूरेगतबांधवःशुभेचधनी॥तनुसोदरः कृपणश्चबंधुपुद्वेरेसदाभ-वति ॥ ४५ ॥ तुर्यगतेव्ययनाथेकृपणोरोगोज्झितः सुकर्माच ॥ मृतिमाप्नोतिहिसुततः सततंमनुजोमहादुःखी ॥ ४६ ॥ द्वादशप-तौसुतस्थेक्रूरेसुतवर्जितः शुभेसुतयुक् ॥ जनककमलाविलासीसम-र्थेतारहितः सदापुरुषः ॥ ४७ ॥ पष्ठगतेव्ययनाथेक्रूरेकृपणोक्षि-दूषणः पुरुषः॥लभतेमृतिंनितांतंभृगुतनयेनेत्रहीनःस्यात् ॥ ४८॥ द्वादशपेसप्तमगेदुष्टोदुश्चरितः कपटवचनः ॥ क्रूरेस्रीरहितःस्यात् सौम्येक्षयमेतिगणिकातः ॥ ४९ ॥ द्वादशपेनिधनगतेअष्टकपा-स्त्रीकार्यसाधनांतरहितः ॥ द्रोहमतिः सौम्यखगेधनसंग्रहतत्परोभ-

वलि ॥ ५० ॥ व्ययनाथेसुकृतगतेतीर्थावलोकतोव्ययेवृत्तिः ॥ क्रूरेखगेचपापीनिरर्थकंयातितद्व्व्ययम् ॥ ५१ ॥ व्ययगेग्रगनगृ-हस्थेपररमणीपराङ्मुखःपवित्रांगः ॥ सुतधनसंग्रहनिरतोदुर्वचनप-राभवतिमातांच ॥ ५२ ॥ लाभस्थेद्वादशपेसुकुमारोदीर्घजीवि-तोभवति॥स्थानप्रवरोदाताविख्यातः सत्यवचनपरः ॥५३॥ वि-भूतिमान्ग्रामनिवासचित्तः कार्पण्यबुद्धिःपशुसंग्रही च ॥ चेज्जी-वतिग्रामयुतः सदास्याद्व्ययाधिनाथेव्ययगेहलीने ॥ ५४ ॥ अन्यत्रच ॥ व्ययभावपतौव्ययगेरिपुगेवापापकृद्भवेन्मनुजः ॥ मातृविरोधीक्रोधीसन्ततिदुःखीपराबलाभोगी १ ॥ ५५ ॥ व्य-यभावपतौमदगेतनुगेवाद्दुर्बलोतिकफरोगी ॥ धनविद्याविधुरोसौ भार्यासुखवर्जितोनित्यम् २ ॥ ५६ ॥ व्ययनाथेधनरन्ध्रस्थि-तेऽच्युतेऽस्याच्युताभक्तिः ॥ संपन्नःसकलगुणैः प्रियवादीधार्मि-कोभवेत्पुरुषः ३ ॥ ५७ ॥ व्ययनाथेधर्मस्थे सहजस्थेवाशरीर-पोषणकृत् ॥ नित्यंद्वेष्टिज्येष्ठान्प्रजांश्चभार्यांगुरुंचापि ४ ॥ ५८ ॥ व्ययनाथेसुखगेवाखेवासुततातमातृसुखहानिः ॥ परगृहवाणिज्या-द्यैः क्षेत्राद्यैश्चक्वचिज्जीवेत् ५ ॥ ५९ ॥ व्ययनाथेसुतभेवाला-भेवापत्यसौख्यविधुरःस्यात् ॥ दत्तक्रीतसुताद्यैर्मणिमुक्ता-द्यैश्चनिर्वाही ६ ॥ ६० ॥ इतिव्ययाख्योद्वादशभावः ॥

॥ अथपंचमहापुरुषलक्षणानिनिरूप्यंते ॥ येमहापुरुषसंज्ञकाः पंचपूर्वमुनिभिःप्रकीर्तिताः ॥ वच्मितान्सरलामलोक्तिभिराजयो-गविधिदर्शनेच्छया ॥ १ ॥ स्वगेहतुंगाश्रयकेंद्रसंस्थैरुच्चोपगैर्वाच-नसूनुमुख्यैः ॥ क्रमेणयोगारुचकाख्यभद्रहंसाख्यमालव्यशशाभिधा-

धानाः ॥ २ ॥ दीर्घास्यःस्वच्छकांतिर्बहुरुधिरबलःसाहसाचाम-
सिद्धिश्चारुभ्रूर्नीलकेशःसमकरचरणोमंत्रविचारुकीर्तिः ॥ रक्तः
श्यामोतिशूरोरिपुबलमथनःकंजकंठोमहौजाः क्रूरोभक्तोनराणांद्वि-
जगुरुविनितःक्षामजानूरुजंघः ॥ ३ ॥ खट्वांगपाशवृषकार्मुकचक्र-
वीणाविह्नांकहस्तचरणःसरलांगुलिःस्यात् ॥ मंत्राभिचारकुशल-
स्तुलयेत्सहस्रंमध्यंचतस्यगदितंसुखदैर्घ्यतुल्यम् ॥ ४ ॥ सह्यस्य
विंध्यस्यतथोज्जयिन्याःप्रभुःक्षरत्संप्रतिरायुरस्मात् ॥ शस्त्राग्निचि-
ह्नोरुचकाभिधानेदेवालयांतेनिधनंकरोति ॥ इतिरुचकः ॥ शा-
र्दूलप्रतिमाननोद्विपगतिः पीनोरुवक्षःस्थलोलंबापीनसुवृत्तबाहुयु-
गलस्तत्तुल्यमानोच्छ्रयः ॥ कामीकोमलसूक्ष्मरोमनिचयैःसंरुद्धगंड
स्थलःप्राज्ञःपंकजगर्भपाणिचरणःसत्वाधिकोयोगवित् ॥ १ ॥
शंखासिकुंजरगदाकुसुमेषुकेतुचक्राब्जलांगलचिह्नितपाणिपादः ॥
यात्रागजेंद्रमदवारिकृतार्द्रभूमसत्कुंकुमःप्रतिमगंधतनुःसुघोषः ॥
॥ २ ॥ सभ्रूयुगोतिमतिमान्खलुशास्त्रवेत्तामानोपभोगसहितोपि
निगूढगुह्यः ॥ सत्कुक्षिधर्मनिरतःसल्ललाटपट्टोधीरोभवेद्धसितकुंचि-
तकेशपाशः ॥ ३ ॥ स्वतंत्रःसर्वकार्येषुस्वजनंप्रतिनक्षमी ॥ भु-
ज्यतेविभवस्तस्यनित्यमर्थिजनैःपरैः ॥ ४ ॥ भारंतुलायांतुलये-
त्प्रयत्नैःश्रीकान्यकुब्जोधिपतिर्भवेत्सः ॥ भद्रोद्भवःपुत्रकलत्रसौ-
ख्योजीवेन्नृपालःशरदामशीतिः ॥ ५॥ इतिभद्रफलम् ॥ रक्ता-
स्योन्नतनासिकासुचरणोहंसप्रसन्नेंद्रियोगौरः पीनकपालरक्तकर-
जोहंसस्वनःश्लेष्मतः ॥ शंखाब्जांकुशमत्स्यदामयुगकैःखट्वांगमा-
लाघटैःभंचत्पादकरस्यतोमधुनिभेनेत्रेसुवृत्तंशिरः ॥ १ ॥ जला-

शग्रशीतिरतीवकामीनयातितृप्तिंवनितासुनूनम् ॥ उच्चोंगुलैर्व्ययैः पडशीतितुल्यैरायुर्भवेत्पट्चवधिःसमानम् ॥ २ ॥ वाह्लीकदेशादरशूरसेनगंधर्वगंगायमुनांतरालात् ॥ भुक्त्वावनांतेनिधनंप्रयाति हंसोयमुक्तोमुनिभिःप्रमाणैः ॥ ३ ॥ इतिहंसः ॥ अस्थूलोष्ठोप्यविषमवपुर्नैवरक्तांगसंधिर्मध्येक्षामःशशिधररुचिर्हस्तिनासःसुगंडः॥ सद्दीप्ताक्षःसमितिशितरहोजानुदेशाप्तपाणिर्मालव्योयंविलसतिनृपः सप्ततिर्वत्सराणाम् ॥ १ ॥ वक्त्रंत्रयोदशमितांगुलमस्यदैर्घ्यंतिर्यग्दशांगुलमितंश्रवणांतरालम् ॥ मालव्यसंज्ञनृपतिःससुतूर्किनूनं लाटांश्चमालवसिंधुसुपारियात्राम् ॥ २ ॥ इतिमालव्यः ॥ लघुद्विजस्योद्रिगतःसकोपःशठोतिशूरोविजनप्रचारः ॥ वनाद्रिदुर्गेपुनदीपुसक्तःप्रियातिथिर्नातिलघुप्रसिद्धः ॥ १ ॥ नानासेनानिचयनिरतोदंतुरश्चापिकिंचिद्धातुर्वादेभवतिकुशलश्चंचलोलोलनेत्रः ॥ स्त्रीसंसक्तःपरधनहरोमातृभक्तोसुजंघोमध्येक्षामःसुललितमतीरंध्रवेदीपरेपाम् ॥ २ ॥ पर्यंकशंखशरशस्त्रमृदंगमालावीणोपमाः खलुकरेचरणेचरेखा ॥ वर्षाणिसप्ततिमितानिकरोतिराज्यंप्राप्तं शशाख्यनृपतिःकथितोमुनींद्रैः ॥ ३ ॥ इतिशशकाः ॥ केंद्रोच्चगायपिभूसुतायामार्तंडशीतांशुवशाभवंति ॥ शार्वतिनोर्वीपतिमात्मपाकेयच्छंतिलोकेवलसत्फलानि ॥ ४ ॥ इतिपंचमहापुरुषलक्षणानि ॥ अथसुनफायोगफलंलिख्यते ॥ भौमादीनां फलंयत्स्याज्जाताःकस्यतुलंबुधः ॥ भाज्ञायप्रवदेत्सम्यक्सुनफादिकृतंफलम् ॥ १ ॥ विक्रोविचंप्रायोनिष्ठुरवचनश्चभूपतिश्चंद्रः ॥ हिंस्रोनित्यंविरोधीसुनफायांसोमसंयोगे ॥ २ ॥ अतिशास्रगतः

कुशलोधर्मरतोकाव्यकृन्मनस्वीच ॥ सर्वहितोरुचिरतनुःसुनफायां सोमजोभवति ॥ ३ ॥ नानाविद्याचार्यःख्यातिंनृपतिंनृपप्रियंचापि ॥ सकुटुंबधनसमृद्धंसुनफायांसुरगुरुः कुरुते ॥ ४ ॥ स्त्रीक्षेत्रगृहपश्चतुष्पदाद्यःसविक्रमोभवति ॥ नृपसुकृतःसुपेवोदक्षःशुक्रेण सुनफायाम् ॥ ५ ॥ निपुणमतिर्ग्रामपुरैर्नित्यंसंत्याजितोधनसमृद्धः ॥ सुनफायांरवितनयेक्रियासुगुप्तोभवेन्मलिनः ॥ ६ ॥

॥ इतिसुनफायोगफलम् ॥ ॥ अथअनफाफलम् ॥

चौरःस्वामीदृग्भ्यःस्ववशीमानीरणोत्कंठः ॥ क्रोधात्संपत्साध्यः स्वतनुःकुजोऽनफायांप्रगल्भश्च ॥ १ ॥ गंधर्वोलेख्यपटुःकविःप्रसक्तान्नृपात्तसत्कारः ॥ रुचिरसुभगोऽनफायांप्रसिद्धकर्माविबुधश्च भवेत् ॥ २ ॥ गांभीर्यःसन्मेधाचानुयुतोबुद्धिमान्नृपात्तयशगः ॥ अनफायांत्रिदशगुरोयातःशक्तोविभुर्भवति ॥ ३ ॥ युवतीनामतिसुभगःप्रणयाक्षितपस्यगोपिताकुंतः ॥ कनकसमृद्धश्चपुमाननफायांभार्गवेभवति ॥ ४ ॥ निस्तीर्णभूज्जनेशोगृहीतवाक्यश्चतुष्पदसमृद्धः ॥ दुर्बलतायाभोगाद्गुणसहितःपुत्रवान्रविजे ॥ ५ ॥ इतिअनफायोगफलम् ॥ ॥ आमृतकोबहुवित्तोनिपुणोनिशठोगुणाधिकोलुब्धः ॥ वृद्धस्त्रीप्रसक्तःकुलाग्रणीःशशिनिभौमबुधमध्ये ॥ १ ॥ ख्यातःकर्मसुकितवोबहुधनवैरस्त्वमर्षणोधृष्टः ॥ आरककःशुक्रगुर्वोर्मध्यगतेशशिनिसंग्राही ॥ २ ॥ उत्तमसुरतो बहुसंचयकारकोव्यसनसक्तः ॥ क्रोधीपिशुनोरिपुमान्यमादयोस्यादुरधरायाम् ॥ ३ ॥ धर्मरतःशास्त्रज्ञोवाक्यपटुःसर्ववर्द्धनसमृद्धः ॥ त्यागयुतोविख्यातोगुरुबुधमध्यस्थितेचंद्रे ॥ ४ ॥ देशदे-

शेगच्छतितत्रतपोनास्तिविषयासहितः ॥ चंद्रेन्येषांपूज्यःस्वजन-
विरोधीज्ञमंदयोर्मध्ये ॥ ५ ॥ प्रियवाक्सुभगःकांतःप्रवृत्तगोयदि
सुकृतवान्नृपतिः ॥ सौख्यः शूरोमंत्रीबुधसितयोर्मध्यगेचहिमकि-
रणे ॥ ६ ॥ धृतमेधास्थैर्ययुतोनीतिज्ञःकनकरत्नपरिपूर्णः ॥
ख्यातोनृपकृत्यकरोगुरुसितयोर्दुर्धरायोगे ॥ ७ ॥ सुखनयविज्ञा-
न्युतःप्रियवाग्विद्वान्धुरंधरोमर्त्यः ॥ ससुतोधनीसुरूपश्चंद्रेगुरु-
भार्गवेतुलांतरगे ॥ ८ ॥ वृद्धचरितःखलाढ्योनिपुणःस्त्रीवहुबोध-
नसमृद्धः ॥ नृपसत्कृतंवहुज्ञंकुरुतेचंद्रःशनिसितयोः ॥ ९ ॥
॥ इतिदुर्धरायोगफलम् ॥ ॥ अथकेमद्रुमफलम् ॥ केमद्रु-
मेभवतिपुत्रकलत्रहीनोदेशांतरेव्रजतिदुःखसदाभितप्तः ॥ ज्ञातिप्र-
मोदनिरतोमुखरःकुचैलोनीचःसदाभवतिभीतियुतश्चिरायुः ॥ १ ॥
यथारत्नकोशेउक्तम् ॥ कुलेनित्यभोगधनभुग्धनसहनाढ्यरत्नागा-
न्वितोधुरंधरांभवेत्सुभृत्यः ॥ केमद्रुमेमलिनदुःखितनीचतेक्षोनि-
स्वश्वतत्रनृपतेरपिवंशजातः ॥ २ ॥ अथकेमद्रुमेभंगमाह ॥
हित्वार्कंसुनफायुजौदुरधरास्वांत्योभवेस्थैर्ग्रहैःशीतांशोःकथितो-
न्यथाबुवहुभिःकेमद्रुमोत्यैःपरैः ॥ केंद्रेशीतकरेथवाग्रहयुतेकेम-
द्रुमोनेपितेकेचित्केंद्रनवांशकेप्यवितिवदंत्युक्तिः प्रसिद्धानते ॥ १ ॥
इतिरत्नकोशे ॥ पुनःकेमद्रुमभंगः ॥ कुमुदगहनबंधुर्वीक्ष्यमाण
समस्तैर्गगनगृहनिवासैर्दीर्घजीवीचिरायुः ॥ फलमशुभसमुत्थंयच
केमद्रुमोक्तंसभवतिनरनाथःसार्वभौमोजितारिः ॥ १ ॥ पूर्णःशशी
यदिभवेच्छुभसंस्थितोवासौम्येमरेज्यभृगुनंदनसंयुतश्च ॥ पुत्रार्थ-
सौख्यजनकःकथितोमुनींद्रैःकेमद्रुमेभवतिमंगलसुप्रसिद्धिः ॥ २ ॥

अथसुनफादयोयोगास्तेकथमुत्पद्यंतेतदाह श्रीलघुजा-
तकात् ॥ रविवर्ज्यंद्वादशगैःसुनफाचंद्राद्वितीयगैः ॥ सुनफाया
उभयस्थितैर्दुर्द्धराकेमद्रुमसंज्ञिताचाच्याः ॥ १ ॥ एतेयोगाश्चं-
द्रादुत्पद्यंते ॥ अथसूर्याद्वेशिवोशियोगमाह ॥ सूर्याद्व्ययगे
वोशिर्द्वितीयगैश्चंद्रवर्जितैर्वेशिः ॥ उभयस्थितैर्ग्रहगणैरुभयचरीना-
मतःप्रोक्तः ॥ १ ॥ मंददृक्स्थिरवचनंपरिभूरिश्रमंनतोर्ध्वतनुम् ।
कथयतिगणिताधिपतिर्वेशिसमुत्थंत्वधोदृष्टिम् ॥ २ ॥ बहुसंच-
यंयदिनुसद्दग्वोशौपुरुपोभवेद्गुरोर्जातः ॥ भीरुःकायाद्विलग्नोलघु-
चेष्टोभृगुसुतोपराधीनः ॥ ३ ॥ परतर्कितोदरिद्रोमृदुर्विनीतोबुधो
विगतलज्जः ॥ मातृघ्नःक्षितिपुत्रोपरोपकारीनरोवोशो ॥ ४ ॥
परदारथंद्रेचवृद्धाकारोघृणीभवेन्मनुजः ॥ संजातनरोवोशौयोगे
शनैश्चरेणसंयुक्ते ॥ ५ ॥ इतिवोशियोगफलम् ॥ उच्चैष्ववचाः
स्मृतिमान्योगयुतोनिरीक्षतेतिर्यक् ॥ पूर्वशरीरेपृथुलोतुच्छगतिः
सात्विकोवेशौ ॥ १ ॥ धृतिसत्यबुद्धियुक्तोभवतिगुरुर्वेशिगोवने
शूरः ॥ रूपतोगुणवानार्यःशूरोभार्गवेपुरुषः ॥ २ ॥ प्रियभाषी
रुचिरतनुर्वेशः स्याद्वाबुधेपराज्ञकृत ॥ संग्रामेविख्यातोभूमिसुते
सूतगुणवानतिख्यातः ॥ ३ ॥ वणिक्कलास्वभावःस्यात्परद्रव्या-
पहारकः ॥ गुरुद्वेषीशनिःसूर्यात्सोमेवेशिशनैश्चरे ॥ ४ ॥ इतिवे-
शियोगफलम् ॥ सर्वसहःसुसमदक्समकायासुस्थितोनिपुणस-
त्यः ॥ नात्युच्चःपरिपूर्णग्रीवोभवेदुभयचर्याणाम् ॥ १ ॥ सुभगो
बहुभृत्यजनोर्बंधूनामाश्रयोनृपतितुल्यः ॥ नित्योत्साहीहृष्टोभुन-
क्तिभोगानुभयचर्यायाम् ॥ २ ॥ इतिसूर्ययोगाः अथान्ये.

पियोगालिख्यंते ॥ पश्चाष्टमेद्वादशेचद्वितीयेचयदाग्रहाः ॥ सिं-
हासनाख्योयोगोयंराजसिंहासनंविशेत् ॥ १ ॥ इतिसिंहासनयो-
गः ॥ अष्टमस्थांयदाक्रूराःसौम्यालग्नेस्थिताग्रहाः ॥ ध्वजयोगे-
त्रजातस्तुसपुमान्नायकोभवेत् ॥ २ ॥ इतिध्वजयोगः ॥ त्रि-
कोणेसप्तमेलग्नेभवंतिचयदाग्रहाः ॥ हंसयोगंविजानीयात्स्ववंश-
स्येयपालकः ॥ ३ ॥ इतिहंसः ॥ एकादशेयदासर्वेग्रहाःस्युर्दश-
मेपिच ॥ लग्नस्थसंमुखेवापिकारिकापरिकीर्तिता ॥ ४ ॥ उत्प-
न्नःकारिकायोगेनीचेपिनृपतिर्भवेत् ॥ राजवंशसमुत्पन्नोराजात-
त्रनसंशयः ॥ ५ ॥ लग्नतश्चान्यतोवापिक्रमेणपतिताग्रहाः ॥ ए-
कावलीसमाख्यातामहाराजोभवेन्नरः ॥ ६ ॥ इत्येकावली ॥
चतुर्थकेंद्रसंज्ञेपुसौम्याःपापग्रहस्थितौ ॥ चतुःसागरयोगोयंराज्य-
दोधनदोभवेत् ॥ १ ॥ अथापरःप्रकारः ॥ कर्कटेमकरेमेषेतुला-
यांचग्रहेस्थिते ॥ चतुःसागरयोगःस्यात्सर्वारिष्टनिपूदनः ॥ १ ॥
चतुःसंधोनरोजातोवहुरत्नसमन्वितः ॥ गजवाजिधनैःपूर्णोधरणी-
शोभवेन्नरः ॥ १८ ॥ इतिचतुःसागरयोगः ॥ चतुर्थेप्वपिकेंद्रे-
पुक्रूराःसौम्यायदाग्रहाः ॥ क्रूरैःपृथ्वीपतिर्विद्यात्सौम्यैर्लक्ष्मीपति-
र्भवेत् ॥ १ ॥ मृगपतिभजलग्नेभानुकेंद्रेत्रिकोणेव्ययनिधनसुसं-
स्थे ८ चंद्रकर्केवृषेज्ञाः ॥ उभययदिचदृष्टचार्जीवशुक्रोथवास्या-
द्भवतिभमरयोगेसर्वरिष्टोविनाशः ॥ १२ ॥ इत्यमरयोगः ॥
शुक्रेघटे ११ कुजेमेषेसुस्थोदेवपुरोहितः ॥ तदाराजाभवेन्नूनंचापः
सौध्यतिदिङ्मुखः ॥ १३ ॥ इतिचापयोगः ॥ कर्कटेमिथुनेमीनक-
न्यायांनापगेग्रहे ॥ दंडयोगःसमाख्याताराजामास्पदकारकः ॥ ४ ॥

दंडेचजातःपृथुपुण्यभागीएकातपत्रीभवतिक्षितीशः ॥ तेजोमयः सिंहपराक्रमश्चसंसेव्यमानोगुरुपात्रवृंदैः ॥१५॥ अथापरप्रकारेणहंसयोगः ॥ मेषेघटेचापतुलामृगालीमध्यग्रहेहंसइतिप्रसिद्धः ॥ सवैश्यपूर्णोनृपतेश्चपूज्योहंसोद्भवोराजसमोमनुष्यः॥ १ ॥ इतिजातकचंद्रिकायांहंसः। धनेव्ययेतथालग्नेशेषस्थानेषुसंस्थिताः॥ वापीयोगोभवेदेवमुदितःपूर्वसूरिभिः ॥५९॥ दीर्घायुःस्यादात्मवंशप्रधानःसौख्योपेतोत्यंतधीरोनरोहि ॥ चंचद्वाक्यस्तन्मनःपुण्यवापी वापीयोगेयःप्रसूतःप्रतापी ॥ ६० ॥ इतिवापीयोगः ॥ ३६ ॥ लग्नाचतुर्थात्स्मरतःखमध्याचतुर्ग्रहस्थैर्गगनेचरेंद्रैः ॥ क्रमेणयूपश्च शरश्चशक्तिर्दंडःप्रदिष्टःखलुजातकज्ञैः ॥ ६१ ॥ धीरोदारोयज्ञकर्मानुसारोनानाविद्यासद्विचारोनरोचः ॥ यस्योत्पत्तौवर्ततेयूपयोगोयांगोलक्ष्म्याजायतेतस्यनित्यम् ॥६२॥ इतियूपयोगः॥३७॥ हिंस्रोत्यंततुल्यदुःखैःप्रतप्तःप्रामानंदःकाननांतेशरज्ञः ॥ मर्त्योयोगेयःशरेजातजन्माश्रीरंभाख्यातस्यनक्वापिसौख्यम् ॥६३॥ इतिशरयोगः ॥ ३८ ॥ नीचैरुच्चैःप्रीतकृत्सालसश्चसौख्यैरथैर्वर्जितोदुर्बलश्च ॥ वादेयुद्धेतस्यबुद्धिर्विशालाशालासौख्यस्याल्पताशक्तियोगे ॥६४॥ इतिशक्तियोगः॥३९॥दीनोहीनोन्मत्तसंजातसौख्योद्वेष्योद्वेगीगोत्रजेर्जातवेदः॥कांतापुत्रैरर्थपुत्रैर्विहीनोहीनोबुद्ध्यादंडयोगेतुजन्मा ॥ ६५ ॥ इतिदंडयोगः ॥ ४० ॥ लग्नाचतुर्थात्स्मरतःखमध्यात्सप्तर्क्षगैर्नैरथकूटसंज्ञः ॥ छत्रंधनुश्चापगृहप्रवृत्तानोपूर्वकेयोगइहार्द्धचंद्रः ॥ ६६ ॥ ख्यातोलब्धोभोगसौख्यैर्विहीनःस्यान्नौयोगेलब्धजन्मामनुष्यः ॥ क्लेशीशश्वच्चंचलःस्वांतवृ-

त्तिस्तोयोद्भूतेधनधान्येनतस्य ॥ ६७ ॥ इतिनौयोगः ॥ ४१ ॥
दुर्गारण्यावासशीलश्चमष्टोमित्रप्रीतिर्निर्धनोनिंद्यकर्मा ॥ धर्माधर्म-
ज्ञानहीनश्चदुष्टःकूटप्रामोत्पत्तिरेवंमनुष्यः ॥ ६८ ॥ इतिकूटयो-
गः ॥ ४२ ॥ प्राज्ञोराज्ञांकार्यकर्तादयालुःपूर्वपश्चात्सर्वसौख्यैरुपे-
तः ॥ यस्योत्पत्तौछत्रयोगोपलब्धिर्लब्धिःस्याच्चेच्छत्रसच्चामराद्यैः
॥ ६९ ॥ इतिच्छत्रयोगः ॥ श्रीजातकाभरणे ॥ आद्येभागेचां-
तिमेजीवितस्यसौख्योपेतःकनकाद्रिप्रचारः ॥ योगेजातःकार्मुके
सोतिदुष्टोगर्वोन्मत्तोत्पत्तिरुत्कार्मुकाख्यः ॥ ७० ॥ इतिकार्मुकयो-
गः ॥ ४३ ॥ भूमीपालप्रामचंचत्प्रतिष्ठःश्रेष्ठःसेनाभूषणार्थांबरा-
द्यैः ॥ चेदुत्पत्तौयस्ययोगोर्द्धचंद्रश्चंद्रःसस्याद्युत्सवार्थजनानाम् ७१ ॥
इतिअर्द्धचंद्रयोगफलम् ॥ ४४ ॥ ततोर्द्धनाडचैकग्रहांतरेणस्युः
स्थानषट्केगगनेचरेंद्राः ॥ चक्राभिधानश्चसमुद्रनामायोगावितीं-
हाकृतिजाश्चविंशत् ॥ ७२ ॥ श्रीमन्नृपोत्यंतजातप्रतापोभूपो-
भूपोपायनैरर्चितःस्यात् ॥ योगेजातःपूरुषोयस्तुचक्रेचक्रेपृथ्व्याः
शालिनीतस्यकीर्तिः ॥ ७३ ॥ इतिचक्रयोगः ॥ ४५ ॥ दाताधीर-
श्चारुशीलोदयालुःपृथ्वीपालप्राप्तसाम्यप्रकामम् ॥ योगेजातोयःसमु-
द्रेसधन्योधन्योवंशस्तेननूनंनरेण ॥ ७४ ॥ इतिसमुद्रयोगः ॥ ४६ ॥
येयोगाःकथिताःपुराबहुतरास्तेषामभावेभवेद्गोलश्चैकगतिर्युगंद्विप-
हगैःशूलस्त्रिगेहोपगैः ॥ केदारश्चचतुर्षुसर्वखचरैःपाशस्तुपंचस्थितैः
षट्संस्थैकदामिनिकाचसततगृहेगर्वीणातिसंख्याइमे ॥ ७५ ॥ विद्या-
सदौदार्यसामर्थ्यहीनानानायासानित्यजातप्रयासाः ॥ एषांयोगः
संभवेद्गोलनामानामास्त्यर्थीतयोऽनीतयस्ते ॥ ७६ ॥ इतिगोल-

नामायोगः॥४७॥पाखंडेनाखंडितप्रीतिभाजोनिर्लज्जाःस्युर्धर्मकर्म-
प्रयुक्ताः॥पुत्रैरथैंःसर्वथातेवियुक्तायुक्तायुक्तज्ञानशून्यायुगाख्ये७७
इतियुगयोगः ॥ ४८॥ युद्धेवादेतत्पराःक्रूरचेष्टाःक्रूराःस्युस्तेनि-
ष्ठुरानिर्द्धनाश्च ॥• योगोयेषांसूतिकालेहिशूलःशूलप्रायास्तेजनानां
भवंति ॥ ७८ ॥ इतिशूलयोगः ॥ ४९ ॥ चापोपेताश्चार्यवं-
तोविनीताःक्रूरौत्सौक्याश्चोपकारादराश्च ॥ योगेकेदारेस्थनरा-
स्तेनधीराचाराश्चापरितेषांविशेषात् ॥ ७९ ॥ इतिकेदारयो-
गः ॥ ५० ॥ दीनाकारास्तत्पराश्चापकारेबंधेनार्त्ताभूरिजल्पाःस-
दंभाः॥नानानर्थापाशयोगप्रजाताजातारण्यप्रीतयःस्युर्मनुष्याः ८०
इतिपाशयोगः ॥५१॥ जातानंदोनंदनाढ्यैःसुधीरोविद्वान् भूपः
कोपसंजाततोषः ॥ चंचच्छीलोदार्यबुद्धिःप्रशस्तःशस्तःसूतौदामि-
नीयस्ययोगः॥८१॥ इतिदामिनीयोगः॥५२॥अर्थोपेताःशास्त्र-
पारंगताश्चसंगीतज्ञाःपोषकाःस्युर्बहूनाम्॥नानासौख्यैरन्विताःस्तुप्र-
वीणावीणायोगेप्राणिनांजन्मयेषाम् ॥ ८२ ॥ इतिवीणायोगः
॥५३॥ प्रोक्तैरेतैर्नामसौख्यैश्चयोगाःस्यात्सर्वेषांप्राणिनांजन्मकाम-
म्॥ तस्मादेतेत्यंतयत्नादपूर्वाःपूर्वाचार्यैर्जातकेसंप्रदिष्टाः ॥ ८३ ॥
उत्पातकेऋशतनुर्निशिवाथदृश्येदृश्येदिवासितरिगर्भयशोदकश्च ॥एवं
स्थितःसमफलःपृथिवीपतित्वंजातोन्ययायःकुरुतेमरिपूर्णमूर्तिः ॥
॥१॥ ॥इतिचन्द्रयोगः ॥५४॥ इतिश्रीजातकाभरणोक्तना-
भसयोगाःप्रोक्ताः॥ ॥ वामवामेग्रहाःसर्वेसूर्यादीनांमुनिस्तथा॥
दरिद्रयोगंजानीयात्रात्रकार्याविचारणा ॥ ८४ ॥ इतिदरिद्रयो-
गः ॥ ५६ ॥ ऋतुरेतश्चसंपर्काज्जायतेविषमागतिः ॥ करसंपुट-

मादायवंध्याभवतिनिश्चितम् ॥८५॥ ॥ इतिकरसंपुटयोगः ॥
॥ ६७ ॥ इतिश्रीपंचमहापुरुषादियोगामिलित्वाअष्टषष्टि-
६८ योगाउक्ता अग्रेन्येपि ॥ मूलत्रिकोणस्वगृहोच्चसंस्थान-
भश्वराःकेंद्रगतामिथःस्युः ॥ तेकारकाख्याःकथितामुनींद्रैर्विज्ञेय-
माज्ञांभुवनेविशेषाः ॥ ८६ ॥ प्रालेयरश्मिर्यदिमूर्तिवर्तीस्वमंदिर-
स्थोनिजतुंगजातः ॥ कुजार्कजार्कामरराज्यपूज्याःपरस्परंकारक-
संज्ञिताश्च ॥ ८७ ॥ शुभग्रहेलग्नगतेचरांबु १० । ४ स्थितोग्रहः
कारकसंज्ञकःस्यात् ॥ तुंगत्रिकोणस्वगृहांशयातास्तेपोह्मनेतप-
नोविशेषात् ॥ ८८ ॥ नीचान्वयेयद्यपिजातजन्मामंत्रीभवेत्कार-
कखेचराद्यैः ॥ राजान्वयेयस्ययदिप्रसूतिर्भूमीपतित्वंसकथंनया-
ति ॥ ८९ ॥ वेशिस्थितोयस्यशुभोनवेगोलग्नंविलग्नेचलवेस्वकी-
ये ॥ केंद्राणिसर्वाणिचसंग्रहाणितस्यालयेश्रीःकुरुतेविलासम् ॥
॥ ९० ॥ केंद्रस्थितागुरुविलग्नकजन्मनाथामध्येचयस्यनितरां
वितरंतिभाग्यम् ॥ शीर्षोदयेप्युदयभेपुगताभवेयुरारंतमध्यभवि-
रामफलप्रदास्ते ॥ ९१ ॥ इतिकारकयोगः ॥ ६९ ॥ संस्था
विलग्नेप्यथसप्तमेचपतंगमुख्यास्तुमहानितांतम् ॥ वदंतियोगंशक-
टाख्यसंज्ञंजातोनरःस्याच्छकटोपजीवी॥९२॥ इतिशकटयोगः
॥७० ॥ युग्मेयुग्मेभवेत्त्रीणिएकैकंचात्रिपुस्थितम् ॥ नंदायोगः
सविज्ञेयश्चिरायुश्चसुखप्रदः ॥ ९३ ॥ इतिनंदायोगः ॥ ७१ ॥
लग्नेचजीवोयुगगेभृगुश्चयूनेचसौम्योदशमेमहीजः ॥ केंद्रेत्वमीचा-
रुफलप्रदाःस्युःसर्वार्थदातारइतिप्रसिद्धः ॥ ९४ ॥ इतिदातार-
योगः ॥ ७२ ॥ घटेमेषेनरे ३ चापेतुलायांसिंहगेग्रहे ॥ राजहं-

सोभवेयोगोराज्यास्पदसुखप्रदः ॥ ९५ ॥ इतिराजहंसयोगः ॥ ॥७३॥सिंहासनेचहंसेचदंडेयोगेमरुध्वजे ॥ चतुःसागरयोगेचचिह्निपुच्छोमहाफलम् ॥९६॥ तुलामकरमेषाद्यलग्नेबाह्यथवाक्वचित् ॥ सिंहासनेचडमरोचिह्निपुच्छःसशस्यते ॥ ९७ ॥ मृगेकर्कचपुच्छःस्याद्राजहंसोसुखप्रदः ॥ कुंभेचमन्मथेचैवचिह्निपुच्छोभिधीयते ॥ ९८ ॥ मृगेकर्कध्वजेपुच्छःकन्यालौवृषभेझपः ॥ चिह्निपुच्छोभवेयोगश्चतुःसागरगोचरे ॥ ९९ ॥ योगोदितफलंपुच्छःकरोतिद्विगुणंफलम् ॥ तेनयोगाधियोगोयंलग्नेपिकस्यचिन्मते ॥ ॥ १०० ॥ घटशून्येनृपसचियोगोमहिषीहयगजैर्युक्तः ॥ नीतिज्ञोबहुपुत्रोलग्नेपिचसम्मतंकेषु ॥ १०१ ॥ इतिचिह्निपुच्छयोगः ॥ ७४ ॥ चन्द्राष्टमेचक्रसंज्ञार्काकिंशुकागृहेविधौ ॥ केमद्रुमेचसंपूर्णयोगोलालाटिकोमतः ॥ १०२॥ आजन्मतोभवतिकारग्रहैःप्रसिद्धःशिल्पादिकर्मकुशलाकुशलाकृतिश्च॥ भूयात्मजोपिलभतेविविधामलब्धिजन्मांतरेपिनजहातिललाटयोगे ॥ १०३ ॥ इतिललाटीयोगः ॥ ७५ ॥ राहुणासहितश्चंद्रःसपापोगुरुवीक्षितः॥ महापातकयोगोयंयदिशुक्रसमोभवेत्॥ १०४॥इतिमहापातकयोगः ॥७६॥भौमेनदृश्यतेलग्नंलग्नंपश्यतिभास्करः ॥गुरुशुक्रौनदृश्येतेबलीवर्देनहन्यते॥ १०५॥इतिबलीवर्दहंतायोगः॥७७॥ आयस्थानगतेचन्द्रेचन्द्रस्थानगतेरवौ॥हठेननाशोविज्ञेयःपंचरात्रौविशेषतः ॥ १०६ ॥ इतिहठहंतायोगः ॥ ७८ ॥ मदनयोर्यदायोगोलग्नेचराहुदर्शने ॥ वृक्षस्थंमरणंतस्ययदिशुक्रसमोभवेत्। ॥ १०७ ॥ इतिवृक्षहंतायोगः॥७९॥षष्ठस्थानगतेशुक्रेतनुस्था-

नगतेकुंजे ॥ नासाच्छेदकरंयोगंवदामिमुनिसत्तम ॥ १०८ ॥ इतिनासाच्छेदयोगः॥ ८० ॥ मंदेचदृश्यतेचंद्रोलग्नेचरविभार्गवौ॥ शुभग्रहांनपश्यंतिकर्णच्छेदोनसंशयः ॥१०९ ॥ इतिकर्णच्छेदयोगः ॥८१॥ कविनासहितोमंदोगुरुणासहितःकविः ॥ शुभग्रहानपश्यंतिपादखंजोभवेन्नरः॥ ११० ॥इतिपादखंजयोगः ॥८२ ॥ लग्नाद्वसममस्थानेशन्यर्कराहुसंस्थिते ॥ सर्पेणपीडिकास्योक्ताशय्यायांस्वपतोपिचं ॥ १११ ॥ इतिसर्पहंतायोगः ॥८३॥ गुरुस्थानेगतेसौम्येशनिस्थानगतेकुजे ॥ पंचविंशेचवर्षेचवनेव्याघ्रेण हन्यते॥ ११२ ॥इतिव्याघ्रहंतायोगः ॥८४॥ शुक्रस्थानेगतेचंद्रे शुक्रस्थानेगतेशनौ ॥ अष्टाविंशतिवर्षेचअसिघातेनमृत्युदः ॥ ॥ ११३ ॥इतिअसिघातयोगः॥८५॥धर्मस्थानगतेभौमेशन्यर्कराहुसंयुते ॥ शुभग्रहानपश्यंतिशरक्षेपेणहन्यते ॥ ११४ ॥ इतिशरक्षेपहंतायोगः ॥८६ ॥ रविणासहितोभौमःशनिर्वाजीवसंस्तुतः ॥ अष्टाविंशतिवर्षेचब्रह्मघातनिसंशयः ॥ ११५ ॥ इति ब्रह्मघातीयोगः ॥ ८७ ॥ रविस्थानगतेचंद्रेगुरुस्थानसमायुतः ॥ सागरेचस्थितेलग्नेपंचापत्यविनाशकृत् ॥ ११६ ॥ इतिपंचापत्यविनाशयोगः॥८८॥अथदोलायोगः॥ मीनेमेषेचचापेचस्थितेस्थानत्रयेगृहे।दोलासंज्ञकयोगःस्याद्राज्यदोषमुदाहृतः॥ ११७॥ सन्मानदानगुणपात्रपरीक्षितोवाकलानिधिःकौशलगीतनृत्यः ॥ मंत्रीश्वरोराजसभाविवेकीकेंद्रस्थितेपापविवर्जितेगुरौ ॥ ११८ ॥ इतिदोलायोगः॥८९॥ ॥अथपदकविच्छेदयोगः॥ ॥ लग्नस्थानगतेभौमःशन्यर्कराहुर्वीक्षितः॥ योगःपदकविच्छेदोयदिशुभ-

समोभवेत् ॥ ११९॥इतिपदकविच्छेदयोगः॥९०॥केंद्रस्थान-
गतेभौमेसैंहिकेयेचसप्तमे ॥ . तदानित्यंविजानीयादस्मान्मृत्युस्त-
दाभवेत् ॥ १२० ॥ इतिइच्छतोमृत्युयोगः ॥९१॥लग्नात्सप्तम-
शीतांशुःपापाष्टशुभलग्नगः ॥ लग्नस्थितोयदाभानुःसमानेम्रियतेशि-
शुः ॥ १२१ ॥ इतिचतुरशीतियोगाःशास्त्रांतरादवलोक्य
लिखिताः ॥ अथाग्रेराजयोगप्रकरणंलिख्यते ॥ ॥ लग्नंलग्न-
पतिर्बलान्वितवपुःकेंद्रत्रिकोणेशिवेपृच्छाजन्मविवाहयानतिलके
कुर्यान्नृपतिभुवम् ॥ सच्छीलंविभवान्वितंगजरुजंमुक्तातपत्रा-
न्वितंजातोनिम्नकुलेविभूतिपुरुषंशंसंतिगर्गादयः॥ १ ॥ एकःशुक्रो
जननसमयेलाभसंस्थेचकेंद्रेजातोवेजन्मराशौयदिसहजगतेप्राप्यते
वेत्रिकोणे ॥ विद्याविज्ञानयुक्तोभवतिनरपतिर्तिविश्वविख्यातकी-
र्तिर्दानीमानीचशूरोहयगुणसहितःसद्गजेःसेव्यमानः॥ २ ॥दशमुख-
भुवननाथःकेंद्रकोणेधनस्थेबलिपतिबलयानेप्रस्तसिंहासनेषु ॥सभ-
वतिनरनाथोविश्वविख्यातकीर्तिर्मदगलितकपोलेःसद्गजेःसेव्यमानः
॥ ३ ॥एकोपिकेंद्रभवनेनवपंचमेवाभास्वान्मयूखविमलीकृतदिग्वि-
भागः ॥ निःशेषदोषमपहत्यशुभप्रसूतंदीर्घायुषंविगतरोगभयंकरो-
ति॥ ४॥चंद्रःपश्येयदादित्यंबुधःपश्येन्निशापतिम् ॥ अस्मिन्यो-
गेतुयोजातःसभवेद्वसुधाधिपः॥ ५॥ यदिभवतिचकेंद्रीयामिनीनाथ
एवप्रददतिप्रियभार्यांपुत्रिणींवासुरूपां॥धनकनकसमृद्धिंमाणिकंही-
ररत्नंरचयतिमृगयाभिश्वंदनेश्वचिंतांगम ॥६॥शुक्रोयस्यबुधोयस्य
यस्यकेंद्रेबृहस्पतिः ॥ दशमोंगारकोयस्यसजातःकुलदीपकः॥७॥
हयरथनरनागेरत्नसम्यक्फलानांजलधितटनिवासीरत्नतुल्यंचधा-

न्यग् ॥ भद्रजनकिलस्तांसत्ययादीमसूतोभवतियद्दिवाकेंद्रेदित्य-
कोणेभृगस्य ॥ ८ ॥ किंकुर्वंतिग्रहाःसर्वेयस्यकेन्द्रेबृहस्पतिः ॥
मत्तमातंगयूथानांभिनत्त्येकोपिकेसरी ॥ ९ ॥ एककवसुरा-
जगृहाधःकेंद्रगोथनवपंचमगोवा ॥ लाभगोभवतियत्रविलग्नेतत्र
शेषखचरैरबलैःकिम् ॥ १० ॥ भवतियदनमूर्तिर्वल्लभः
कामिनीनांसकलजनसमर्थोदीर्घजन्माविहाय ॥ ध्वजविपयगुण-
ग्रांग्रस्यमृत्यःप्रधानःसधनकनकपूर्णोदित्यगोयस्यकेंद्रे ॥ ११ ॥
धनधान्यप्राज्ञःशरीरोमंत्रीयादंडनायकःपुरुषः ॥ दशमस्थेरवितनयेवृंदः
पुरग्रामनेताया ॥ १२ ॥ तुलाकोदंडमीनस्थोलग्नस्थोपिशनैश्च-
रः ॥ करोतिभूपतेर्जन्मवंशेचनृपतिर्भवेत् ॥ १३ ॥ दिव्यस्त्री-
परकांचनांबरगतामाधारलक्ष्मीमयःशास्त्रंकौतुकगीतनृत्यरसता-
व्यापारदीक्षागुरुः ॥ पुत्रभ्रातृजनान्वितःस्थिरमतिःकर्तातिमीतय-
न्धितोजीवःकेंद्रयदाभवेन्निजसुखीसत्कर्मकारीनरः ॥ १४ ॥
आकाशमंदिरगतस्तनुपःस्वगेहेकुर्यान्नृपंनृपतिचक्रवरैःसुसेव्यः ॥
सैन्यंप्रतापदहनाहतशत्रुपक्षंशक्रोयथासुरगणेभ्रविराजमानः ॥
॥ १५ ॥ उपचयगृहसंस्थो ३।६।१०।११ जन्मदोषस्यचंद्रः
स्वगृहमथनवांशेकेंद्रजातश्चसौम्याः ॥ सकलबलविपुलश्रीयपा-
पाभिधानंसभवतिनरनाथःशक्रतुल्योबलेन ॥ १६ ॥ विद्याकला-
गुणविराजितकामधेनुर्भोगैःपरंयस्युयतिजितकामराजः ॥ देशा-
धिपत्यपुरपत्तनगजश्रियातोभीनेसतोसकलमंडलदीप्तदीक्षैः ॥ १७ ॥
कामेजकन्येरिपुरंध्रसंस्थेकेंत्रत्रिकोणेव्ययगेचराहुः ॥ कामीचशू-
रोमलधान्यभोगीगजाश्वछत्रंबहुपुत्रताच ॥ १८ ॥ मृगुएभिग्रपु-

कन्याकर्कटस्थेचराहुर्भवतिविपुललक्ष्मीराजराज्याधिपोवा ॥ ह-
यगजनरनौकामेदिनीपंडितश्चसभवतिकुलदीपोराहुतुंगोनराणाम् ॥
॥ १९ ॥ केंद्रत्रिकोणेबुधजीवशुक्राद्दष्टानराणांयदिजन्मकाले ॥
धर्मार्थविद्यायशकीर्तिलाभःशांतःशुशीलःसनराधिपःस्यात् २०॥
भृगुसुतसुरपूज्यश्चंद्रमाःकेंद्रवर्तीबहुसुखधनवृद्धिःकर्मसाध्यंनराणा-
म् ॥ रविसुतशशिपुत्रेभानुजीवेत्रिकोणेक्षितिसुतदशमेपुराजयोगा-
वदंति ॥ २१ ॥ केंद्रत्रिकोणेपुभवंतिसौम्यादुश्चिक्यलाभारिग-
ताश्चपापाः ॥ यस्यप्रयाणेप्यथजन्मकालेध्रुवंभवेत्तस्यमहीपति-
त्वम् ॥ २२ ॥ लाभेत्रिकोणेयदिशीतरश्मिःकरोत्यवश्यंक्षिति-
पालतुल्यम् ॥ कुलद्वयानंदकरंनरेंद्रंज्योत्स्नाहिदीपस्तमनाशका-
री ॥ २३ ॥ शत्रुस्थानेयदाजीवोलाभस्थानेशशीभवेत् ॥ गृह-
मध्येसजातश्चविख्यातःकुलदीपकः ॥ २४ ॥ लग्नाधिपोवाजीवो-
वाशुक्रोवायत्रकेंद्रगः॥तस्यपुंसश्चदीर्घायुःसभवेद्राजवल्लभः।२५॥
दशमेबुधसूर्यौचभौमराहूचषष्ठगौ॥राजयोगोत्रयोजातः सपुमान्ना-
यकोभवेत् ॥२६॥आदौजीवःशनिश्चांतेगृहमध्येनिरंतरम्॥राज-
योगंविजानीयात्कुटुंबबलमुत्तमम् ॥२७॥ सहजस्थोयदाजीवोमृ-
त्युःस्थानेयदासितः॥निरंतरंगृहंमध्येराजाभवतिनिश्चितम्॥ २८॥
जीवोवृषेसुधारश्मिर्मिथुनेमकरेकुजः ॥ सिंहेभवतिसौरिश्चकन्यायां
बुधभास्करौ॥२९॥तुलायामसुराचार्योराजयोगोभवेदयम् ॥अत्र
योगेसमुत्पन्नोमहाराजोभवेन्नरः॥ ३० ॥अष्टमेद्वादशेवर्षेयदिजीव
तिमानवः॥सार्वभौमस्तदाराजाजायतेविश्वपालकः ॥ ३१ ॥ एको-
जीवोयदालग्नेसर्वेयोगास्तदाशुभाः ॥ दीर्घजीवोमहाप्राणोजातको

नायकोभवेत् ॥ ३२ ॥ धनेशुक्रोथभौमश्चमीनेजीवस्तुलाबुधः ॥ नीचस्थोशनिचंद्रौचराजयोगस्तदाध्रुवम् ॥ ३३ ॥ अस्मिन्योगेचयोजातःसराजाधनवर्जितः ॥दाताभोक्ताचविख्यातोमान्योमंडलनायकः ॥ ३४ ॥ मीनेशुक्रोबुधश्चांतेधनेराहुस्तनौरविः ॥ सहजेचभवेद्भौमोराजयोगोभिधीयते ॥ ३५ ॥ सहजेचयदाजीवोलाभस्थानेचचंद्रमाः ॥ सराजागृहमध्यस्थोविख्यातःकुलदीपकः ॥ ३६ ॥ शुभग्रहाःशुभक्षेत्रेभवंतियदिकेंद्रगाः ॥ तदाशुभानिकर्माणिसकरोतिहिजातकः ॥ ३७ ॥ उच्चस्थानगताःसौम्याःकेंद्रस्थानेभवंतिचेत् ॥ ध्रुवंराज्यंभवेत्तस्ययदिनीचसुतोभवेत् ॥ ३८ ॥ स्वक्षेत्रस्थोयदाजीवोबुधःसौरिश्चचेद्भवेत् ॥ तस्यजातस्यदीर्घायुःसंपत्तिश्चपदेपदे ॥ ३९ ॥ मीनेबृहस्पतिः शुक्रश्चन्द्रमाश्चयदाभवेत् ॥ तस्यजातस्यराज्यंस्यात्पत्नीचबहुपुत्रिणी ॥ ४० ॥ पंचमस्थोयदाजीवोदशमस्थश्चचन्द्रमाः ॥ सराजवान्महाबुद्धिस्तपस्वीचाजितेंद्रियः ॥ ४१ ॥ सिंहेजीवस्तुलाकीटश्चापेपुमकरेपिच ॥ ग्रहायदातदाजातोदेशभोगीभवेन्नरः ॥ ॥ ४२ ॥ तुलाकोदंडमीनस्थोलग्नसंस्थोपिचेच्छनिः ॥ करोति भूपतेर्जन्ममहापुण्यानुभावतः ॥ ४३ ॥ वियास्थानेयदासौम्याः कर्कस्थानेचचंद्रमाः ॥ धर्मस्थानेयदासौम्याराजयोगस्तदाभवेत् ॥ ॥ ४४ ॥ मकरेचघटेमीनेवृषेमिथुनमेषयोः ॥ ग्रहास्तदाचविख्यातोराजाभवतिमानवः ॥ ४५ ॥ बुधभार्गवजीवार्कियुक्तोरोगहुश्चनष्टये ॥ कुरुतेकमलारोग्यपुत्रमानादिकंफलम् ॥ ४६ ॥ चतुर्थभुवनेशुक्रोगुरुचंद्रधरासुता- ॥ रविसौरियुताःसंतिराजाभवतिनिश्चितम् ॥ ४७ ॥ अष्टमेचव्ययेक्रूरोमध्येचक्रूरसौम्यकौ ॥

राजयोगोत्रयोजातोमहाभूपोभविष्यति ॥ ४८ ॥ लग्नेसौरिस्त-
थाचंद्रस्त्रिकोणेजीवभास्करौ ॥ कर्मस्थानेभवेद्भौमोराजयोगोभि-
धीयते ॥ ४९ ॥ नवमेचयदासूर्यःस्वगृहस्थोभवेत्तदा ॥ तस्य
जीवतिनोभ्राताऽस्यादेकोपिभूपैःसमः ॥ ५० ॥ द्वित्रितुर्येस्ति
तेषष्ठेकर्मण्यपियदाग्रहाः ॥ राजयोगंविजानीयाज्जातस्तुच्छकुलो-
ऽपिचेत् ॥ ५१ ॥ लग्नेक्रूरेव्ययेसौम्योधनेक्रूरश्चजायते ॥ राज-
योगोत्रयोजातोभूपतिर्भवतिस्फुटम् ॥ ५२ ॥ लग्नेक्रूरोव्ययेक्रू-
रोधनेसौम्योयदाभवेत् ॥ सप्तमेभवतिक्रूरःपरिवारक्षयंकरः ॥
॥ ५३ ॥ धनेचंद्रश्चशुक्रश्चमेषेजीवोयदाभवेत् ॥ दशमेराहुशुक्रौ
चराजयोगोभिधीयते ॥ ५४ ॥ सिंहेजीवोथकन्यायांभार्गवो मि-
थुनेशनिः॥स्वक्षेत्रेहिबुकेभौमःसपुमान्नायकोभवेत् ॥५५॥ शनि-
चंद्रौचकन्यायांसिंहेजीवोघटेतमः॥मकरेचकुजस्तत्रजातःस्याद्वि-
श्वपालकः ॥ ५६ ॥ शुक्रोजीवोरविर्भौमश्चापेमकरकुम्भयोः ॥
मीनेचवत्सरेत्रिंशेसमर्थःसर्वकर्मसु ॥ ५७ ॥ कर्मलग्नेजीवशुक्रौ
लाभेचंद्रजभार्गवौ ॥ मेषेभानुश्चजातोयोयोगेस्मिन्नृपतिर्भवेत् ॥
॥ ५८ ॥ कर्मस्थानेयदाजीवोबुधःशुक्रस्तथाशशी ॥ सर्वकर्मा-
णिसिद्ध्यंतिराजमान्योभवेन्नरः ॥५९॥ षष्ठेष्टमेपंचमेवानवमेद्वा-
दशेतथा ॥ सौम्यक्रूरग्रहैर्योगेराजमान्योनसंशयः ॥ ६० ॥
पंचमेचयदाषष्ठेचाष्टमेनवमेक्रमात् ॥ भौमराहुसितार्काःस्युर्जात-
कःकुलपालकः ॥ ६१ ॥ लग्नेसौरिस्तथाचंद्रश्चाष्टमेभार्गवोयदा॥
जायतेत्रनृपोयोगेमानीभूरिप्रियःसदा ॥ ६२ ॥ मिथुनस्थोयदा-
राहुःसिंहस्थोभूमिनंदनः॥अत्रयोगेनरोजातोनृपोश्वगजनायकः ॥
॥ ६३॥ चापार्द्धेशशिनायुक्तोयदिसूर्यःप्रजायते ॥ लग्नेचसबलो

# ज्योतिषग्रंथाः ।

| | | |
|---|---|---|
| २७९ शीघ्रबोधभाषाटीका | ०-३ | ०-१ |
| २८० संकेतनिधिसटीक पं० रामदत्तजीकृत यह ग्रंथ अत्युत्तम देखने योग्य है | १-० | ०-२ |
| २८१ षट्पञ्चाशिका भाषाटीका | ०-४ | ०-॥ |
| २८२ भुवनदीपक सटीक | ०-४ | ०-॥ |
| २८३ जैमिनिसूत्रसटीक चार अध्यायका | ०-७ | ०-१ |
| २८४ रमलनवरत्न | ०-८ | ०-१ |
| २८५ रमलनवरत्नभाषाटीका | ०-१२ | ०-१ |
| २८६ सर्वार्थचिंतामणि | ०-१२ | ०-३ |
| २८७ लघुजातकसटीक | ०-६ | ०-१ |
| २८८ सामुद्रिकभाषाटीका | ०-४ | ०-॥ |
| २८९ सामुद्रिक शास्त्रबड़ा सान्वय भाषाटीका | १-४ | ०-२ |
| २९० यवनजातक | ०-२ | ०-॥ |
| २९१ पंचांगतिथिपत्र संवत् १९५२ का | ०-१॥ | ०-॥ |
| २९२ पंचांग १०वर्षका (ज्योतिर्विदोंकालाभदायक) | १-८ | ०-२ |
| २९३ हायन रत्न | १-८ | ०-४ |
| २९४ अर्घप्रकाश ज्योतिष भाषाटीका इसमें तेजी मंदी वस्तु देखनेका विचार है | ०-४ | ०-॥ |
| २९५ ज्योतिषकी लावणी | ०-१ | ०-॥ |
| २९६ शकुनवसंतराज भाषाटीकासहित | ३-० | ०-८ |
| २९७ रत्नदीपभाषाटीका | ०-५ | ०-॥ |
| २९८ बृहत् मुहूर्तसिंधु | २-० | ०-४ |
| २९९ मकरंदसारणी उदाहरण सहित | ०-१० | ०-१ |
| ३०० भावकुतूहलभाषाटीका (फलादेशउत्तमोत्तमहै) | १-० | ०-२ |

पुस्तक मिलनेका ठिकाना—

खेमराज श्रीकृष्णदास.

"श्रीवेंकटेश्वर" छापाखाना मुंबई.



गजमानवान् ॥ ९० ॥ जीवनिशाकरसूर्याः पंचमनवमतृतीयगात् ॥ लग्नाय दिशवतितदाराजाकुबेरतुल्योधनप्रसवैः ॥ ९१ ॥ सिंहे जीवस्तुलाकीटधनुर्मकरकेपुच ॥ ग्रहाश्चान्येयदाजातोदेशभोगी भवेन्नरः ॥ ९२ ॥ स्वगृहेचभवेत्सूर्यस्तुलायांचभवेत्सितः ॥ मिथुनेतिष्ठतिसौरिराजयोगःप्रजायते ॥ ९३ ॥ षष्ठेचपंचमेचेवनवमेद्वादशेतथा ॥ सौम्यक्रूरग्रहायोगाराजमान्यःसकंटकः ॥ ९४ ॥ त्रिकोणकोणेबुधजीवशुक्रास्त्रिषड्दशेसोमसुतेर्कपुत्रे ॥ जायास्थितेचेत्परिपूर्णचंद्रेनूनंसजातोनृपतेःसमानः ॥ ९५ ॥ लग्नेसौरिस्तथाचंद्रश्चाष्टमेभुवनेसितः ॥ राजमान्योमहाकामीभोगपत्नीजनस्तथा ॥ ९६ ॥ धनेशुक्रश्चसौमश्चमीनेजीवोघटेबुधः ॥ नीचचंद्रो रविर्युक्तोराजयोगोभिधीयते ॥ ९७ ॥ अस्मिन्योगेनरोजातोराजा विभववर्जितः ॥ दानभोगादिविख्यातःसामान्यःसभवेन्नरः ॥ ९८ ॥ मीनेशुक्रेबुधश्चांते १२ लग्नेसूर्यश्चशशीधने ॥ सहजेचभवेद्राहूराजयोगःप्रचक्षते ॥ ९९ ॥ भानिर्जीवस्तथाशुक्रश्चंद्रमाश्चयदाभवेत् ॥ तस्यजातस्यराज्यंस्यात्पत्नीचबहुपुत्रिका ॥ १०० ॥ आयस्थानेयदासौम्यःक्रूरस्थानीयचंद्रमाः ॥ कर्मस्थानेपुनःसौम्यस्तदाराज्यंविधीयते ॥ १ ॥ आदौजीवःपंचमेचदशमेचंद्रमाभवेत् ॥ राजमान्योमहाबुद्धिस्तेजस्वीचातितेजसः ॥ २ ॥ ॥ इतिचतुरशीतिराजयोगप्रकरणम् ॥ इति धौलेडाग्रामनिवासिज्योतिर्विल्लक्ष्मणदासनोनिधिरामसंगृहीतोजातकसंग्रहःसमाप्तः ॥ शुभमस्तु ॥

---

पुस्तक मिलनेका ठिकाना
खेमराज श्रीकृष्णदास "श्रीवेंकटेश्वर" छापाखाना-मुंबई

# ज्योतिषग्रंथाः ।

| | | | |
|---|---|---|---|
| २७९ | शीघ्रबोधभाषाटीका | ०-६ | ०-१ |
| २८० | संकेतनिधिसटीक पं० रामदत्तजीकृत यह ग्रंथ अत्युत्तम देखने योग्य है | १-० | ०-२ |
| २८१ | षट्पंचाशिका भाषाटीका | ०-४ | ०-॥ |
| २८२ | भुवनदीपक सटीक | ०-४ | ०-॥ |
| २८३ | जैमिनिसूत्रसटीक चार अध्यायका | ०-७ | ०-१ |
| २८४ | रमलनवरत्न | ०-८ | ०-१ |
| २८५ | रमलनवरत्नभाषाटीका | ०-१२ | ०-१ |
| २८६ | सर्वार्थचिंतामणि | ०-१२ | ०-२ |
| २८७ | लघुजातकसटीक | ०-६ | ०-१ |
| २८८ | सामुद्रिकभाषाटीका | ०-४ | ०-॥ |
| २८९ | सामुद्रिक शास्त्रबड़ा सान्वय भाषाटीका | १-४ | ०-२ |
| २९० | यवनजातक | ०-२ | ०-॥ |
| २९१ | पंचांगतिथिपत्र सवत् १९५२ का | ०-१॥ | ०-॥ |
| २९२ | पंचांग १०वर्षका (ज्योतिर्विदोंकालोभदायक) | १-८ | ०-२ |
| २९३ | हायनरत्न | १-८ | ०-४ |
| २९४ | अर्घप्रकाश ज्योतिष भाषाटीका इस्में तेजी मंदी वस्तु देखनेका विचार है | ०-३ | ०-॥ |
| २९५ | ज्योतिषकी लावणी | ०-१ | ०-॥ |
| २९६ | शकुनवसंतराज भाषाटीकासहित | ३-० | ०-८ |
| २९७ | रत्नदीपभाषाटीका | ०-५ | ०-॥ |
| २९८ | बृहत मुहूर्त्तसिंधु | २-० | ०-४ |
| २९९ | मकरंदसारिणी उदाहरण सहित | ०-१० | ०-१ |
| ३०० | भावकुतूहलभाषाटीका (फलादेशउत्तमोत्तमहै) | १-० | ०-२ |

पुस्तक मिलनेका ठिकाना—

खेमराज श्रीकृष्णदास,

"श्रीवेंकटेश्वर" छापाखाना मुंबई.

